# ॥ संस्कृतोपक्रमपाठावलिः ॥

# A FIRST READER OF SANSKRIT.

BY

**Y. MAHALINGA SASTRI M.A., B.L.**

**Sri Sahitya Candra Sala**

# PRICE LIST OF BOOKS

## by the Same Author.

1. लघुरामचरितम । Laghu Ramacharita–(The Ramayana abridged for the beginner in Valmiki's own words) 2nd edition. Approved by the T. B. C. Madras ... 0—6–

2. भासकथासारः । Bhasakathasara—In three Parts. Part I 2nd edition ... 0—8–
   Part II 2nd edition ... 0—8–
   Part III 3rd edition ... 1—0–

[*Note.*—English summaries of the stories are cluded in each Part. The third Part bei the Intermediate Prose Text in the Madi University, is furnished, in addition, w a Critical Introduction and copious note

भासकथासारः । All the three Parts in one Volume—is in the course of publication and will be ready in March 1938.

3. Translation into English of Part III (with exhaustive conjugations) 2nd edition ... 0—8

4. कौण्डिन्यप्रहसनम् । Kaundinya Prahasanam—A delightful comic play —with notes ... 0—8

# ॥ उपक्रमपाठावलिः ॥

# SANSKRIT FIRST READER



BY

**Y. MAHALINGA SASTRI,** M.A., B.L.,

(Sanskrit Lecturer, Annamalai University)

Author of Bhasakathasara, Kinkinimala, Kaundinyaprahasanam, Laghu Ramacharitam etc.,

**SRI SAHITYA CANDRA SALA,**
**Annamalainagar,**
**CHIDAMBARAM.**

 Dec. 1937 [Price As. 10.

# PREFACE.

Since well-nigh thirty years back, the demand for Sanskrit texts on a new model adopted to modern conditions of teaching in the High School classes, has been steadily in the increase. And a succession of learned Pandits, through their efforts in compilation, condensation and composition, have sought to meet the demand from time to time. I have been in touch with these well-meant efforts in all the fulness of their range, very largely due to my having had the privilege, during several years, of reviewing many of them for "The Hindu" of Madras. In such an out-put of books extending over about a quarter of a century one can find already all the cults and creeds of a pedagogic origin in regard to the methods of school instruction experimented with zealous optimism. And yet I have ventured to bring out this series of Pathavalis for the young student of Sanskrit induced by a conviction similar to that with which Sri Nilakantha Dikshita wrote :—

पश्येयमेकस्य कवेः कृतिं चेत्सारस्वतं कोशमवैमि रिक्तम्।
अन्तःप्रविश्यायमवेक्षितश्चेत्कोणे प्रविष्टा कविकोटिरेषा॥

For, these books are the result of a patient process of evolution up to their present form during several years preceding, vitalized by an

energy of purpose and infinite thought which I could have deemed adequate for ensuring the proper tone and mettle of compositions of a higher order.

In preparing these Readers, I have been dominated not merely by a desire to present in them the Sanskrit language in its prestine loveliness and purity, but also to bring it out essentially as a language of culture—which it has unquestionably been for several thousands of years in the past for all India—in both its ethical and aesthetic aspects.

The lessons, in this First Reader which are for the most part dialogues lively with human interest are, it is believed, calculated to inspire young pupils to betake themselves to repeating them in character with expression of feelings. Such a practice, if properly encouraged, will conduce very much to familiarise students with the sound and sense of Sanskrit in its *Lakshya* aspect and pave the way easy for their entering into *Lakshana* later.

The *Upakrama Pathavali* is intended to cover the first two years of the course of a beginner in Sanskrit. Lesson XIII might furnish approximately the dividing line.

With much reluctance I had to withdraw, for considerations of space, a lesson on the Ten

Avatars which by its traits of affinity belongs to this series of lessons. I hope to be able to mend this deficiency in a future edition of the book, if any.

Short notes are added in the end which the teacher is requested to glance through before taking up a lesson. A glossary is further added for the student to help himself by referring to it as often as he feels the need.

My thanks are due to M. R. Ry., R. Swaminatha Ayyar Avl., Retired Headmaster, Town High School, Kumbakonam for his writing the Foreword.

I hope that my endeavour will meet with the sympathetic appreciation and liberal patronage of enlightened educationists.

उदारवस्तुसन्दृब्धमुन्मिषद्भावबन्धुरम् ।
सन्निवेशमनोहारि सद्यः कौतुकवर्धनम् ॥

समुच्छ्रायितसन्मार्गपताकापरिकर्मितम् ।
गैर्वाणवाङ्मयाट्टाल - चारुतोरणविभ्रमम् ॥

अविच्छिन्नप्रवाहोढा बालाः पाठावलित्रयम् ।
साधयन्तु धृतोत्साहाः काले काले कुले कुले ॥

*Chidambaram,*
30—11—1937. Y. MAHALINGA SASTRI.

# FOREWORD.

This is indeed an exceedingly nice little book, which (the talented Sanskrit Lecturer) Mr. Y. Mahalinga Sastri has brought out, being the first of a series he seems to contemplate. It has been most beautifully planned with delightful, instructive lessons in Prose and Poetry, mostly in dialogic form. Intelligent and resourceful teachers with enough enthusiasm could well use the book to develop in their pupils the power to observe and speak in Sanskrit. They could at the same time inspire in them a respect for their scriptural teachings and past traditions.

That Sanskrit is a highly refined language rich in literature of unsurpassed beauty, and the magnificent achievements of India in the region of religion and philosophy are all in Sanskrit, is generally admitted. Every possible provision, therefore, for a proper study of that language in schools and colleges is most desirable. I am convinced that Mr. Mahalinga Sastrial's Upakrama Pathavali would serve as a suitable, satisfactory foundation for the higher structure of literary and religious study in Sanskrit. It is to be hoped that its excellence will be widely and readily appreciated and its learned author adequately encouraged to proceed with his work. God speed him!

R. SWAMINATHA AYYAR,

14—12—1937.

## ॥ अत्रेदमवधेयम् ॥

पठितॄनिमां पाठावलिं शिक्षयितृभिर्विपश्चिद्भिरस्मिन् प्राथमिके मुद्रापरिवर्तेऽस्याः यत्र क्वचिद्वाक्याभ्यन्तरे अजादौ पदे परे प्रामादिको मोऽनुस्वरः परिदृश्यते तत्र मकारं विनिवेश्य पाठयितव्यमित्यभ्यर्थ्यते ॥

## ॥ उपक्रमपाठावलिः ॥

### द्वितीयभागे पाठक्रमसूची ॥

### Contents of Part II.

ॐ

# ॥ उपक्रमपाठावलिः ॥

## PART I. प्रथमो भागः ।

### ॥ अक्षरपरिचयः ॥

हरिः ओम् नमो नारायणाय सिद्धम् ।

अचः—(Vowels).

| | | | |
|---|---|---|---|
| अ | आ | ए | ऐ |
| इ | ई | ओ | औ |
| उ | ऊ | अं | |
| ऋ | ॠ | अः | |
| ऌ | | | |

अचां अभ्यासः (Exercise.)

# अ आ ओ औ अं अः

# उ ऊ

# ए ऐ

# इ ई

# ऋ ॠ ऌ

---

हलः—(Consonants).

| | | | | |
|---|---|---|---|---|
| क | ख | ग | घ | ङ |
| च | छ | ज | झ | ञ |
| ट | ठ | ड | ढ | ण |
| त | थ | द | ध | न |
| प | फ | ब | भ | म |

य र ल व

श ष स

ह

ज्ञ ळ क्ष

---

अचां हलां च अभ्यासः (Exercise.)

क ल ळ

त न

ट ढ द ठ छ

च ज ञ

ज्ञ क्ष

थ भ य म

ग ण प ष फ ए ऐ

घ ध

व ब

स ख श र

इ ई ङ ड ह झ

| | | | |
|---|---|---|---|
| अथ | आम | ऋक्ष | ऋषभ |
| इव | ईश | एक | ऐल |
| उत | ऊह | ओदन | औरस |
| | | अंबर | |

---

| | | | |
|---|---|---|---|
| कट | चय | वट | तव |
| खग | छल | मठ | शपथ |
| गगन | जप | जड | दल |
| घट | झर | ऊढ | धन |
| | | क्षण | |

| | | |
|---|---|---|
| पटह | अवयव | |
| फल | गरल | |
| बदर | भवन | हयवदन |
| भय | शशधर | नयज्ञ |
| मख | चषक | सरलगळ |
| मदन | सहचर | वलक्षपक्ष |

| | | | |
|---|---|---|---|
| क् + अ = क | | क् + ऋ = कृ | ृ |
| क् + आ = का | ा | क् + ॠ = कॄ | ॄ |
| क् + इ = कि | ि | क् + ऌ = कॢ | ॢ |
| क् + ई = की | ी | क् + ए = के | े |
| क् + उ = कु | ु | क् + ऐ = कै | ै |
| क् + ऊ = कू | ू | क् + ओ = को | ो |
| | | क् + औ = कौ | ौ |
| क् + अं = कं | ं | क् + अः = कः | ः |

Similarly :—

द दा दि दी दु दू दृ दॄ दॢ
दे दै दो दौ दं दः
र रा रि री रु रू — — —
रे रै रो रौ रं रः
प पा पि पी पु पू पृ पॄ पॢ पे पै
पो पौ पं पः

Etc., Etc., Etc.,

## संयुक्तव्यञ्जनानि ।
Conjunct Consonants.

क् + क = क्क    प् + प = प्प
च् + च = च्च    ब् + ब = ब्ब
ज् + ज = ज्ज    म् + म = म्म
ट् + ट = ट्ट    य् + य = य्य
ड् + ड = ड्ड    ल् + ल = ल्ल
ण् + ण = ण्ण    व् + व = व्व
त् + त = त्त    श् + श = श्श
द् + द = द्द    ष् + ष = ष्ष
न् + न = न्न    स् + स = स्स

क्म (क्म)    ग्म (ग्म)    ख्य (ख्य)    ङ्ख (ङ्ख)
क्य (क्य)    ग्य (ग्य)    ङ्क (ङ्क)    ङ्ग (ङ्ग)
क्न (क्न)    घ्य (घ्य)    ज्व (ज्व)    त्व (त्व)
क्ल (क्ल)    घ्न (घ्न)    च्छ (च्छ)    न्व (न्व)
क्व (क्व)    ञ्ज (ञ्ज)    ञ्च (ञ्च)    ब्द (ब्द)
क्स (क्स)    ष्ट (ष्ट)    ण्ड (ण्ड)    ण्व (ण्व)
व्य (व्य)    च्य (च्य)    ज्य (ज्य)    ण्य (ण्य)

| | | | |
|---|---|---|---|
| न्त (न्‌त) | त्न (त्‌न) | ट्य (ट्‌य) | न्ध (न्‌ध) |
| ध्म (ध्‌म) | ध्य (ध्‌य) | ट्व (ट्‌व) | ड्य (ड्‌य) |
| ल्य (ल्‌य) | म्प (म्‌प) | ध्न (ध्‌न) | स्न (स्‌न) |
| ढ्य (ढ्‌य) | स्म (स्‌म) | स्थ (स्‌थ) | प्त (प्‌त) |
| प्स (प्‌स) | प्य (प्‌य) | ष्य (ष्‌य) | भ्व (भ्‌व) |
| भ्य (भ्‌य) | स्य (स्‌य) | ष्व (ष्‌व) | क्त (क्‌त) |
| ढ्र (ढ्‌र) | द्य (द्‌य) | क्र-क्र (क्‌र) | द्र (द्‌र) |
| ग्र (ग्‌र) | ह्र (ह्‌र) | ज्र (ज्‌र) | त्र (त्‌र) |
| प्र (प्‌र) | र्थ (र्‌थ) | र्ह (र्‌ह) | र्व (र्‌व) |
| र्ध (र्‌ध) | र्ष (र्‌ष) | श्य (श्‌य) | श्च (श्‌च) |
| श्ल (श्‌ल) | श्व (श्‌व) | स्थ्य (स्‌थ्‌य) | श्म (श्‌म) |
| द्म (द्‌म) | ह्म (ह्‌म) | स्प्र (स्‌प्र) | क्त्र (क्‌त्र) |
| द्व्र (द्‌व्‌र) | ग्र्य (ग्‌र्‌य) | त्म्य (त्‌म्‌य) | ण्ठ्य (ण्‌ठ्‌य) |
| द्र्य (द्‌र्‌य) | स्त्र (स्‌त्र) | त्स्न (त्‌स्‌न) | त्र्य (त्‌र्‌य) |
| च्छ्व (च्‌छ्‌व) | र्श्य (र्‌श्‌य) | ङ्घ्य (ङ्‌घ्‌य) | द्ध्व (द्‌ध्‌व) |
| क्ष्म्य (क्‌ष्‌म्‌य) | र्ह्य (र्‌ह्‌य) | र्श्व (र्‌श्‌व) | र्स्म्य (र्‌स्‌म्‌य) |
| | ह्म्य (ह्‌म्‌य) | प्द्य (प्‌द्‌य) | |

## पदपरिचयः

| | | | |
|---|---|---|---|
| बालः | वृद्धः | धर्मः | पापम् |
| बुधः | मूर्खः | सुखम् | दुःखम् |
| आढ्यः | दरिद्रः | सत्यम् | अनृतम् |
| खलः | साधुः | ज्ञानम् | अज्ञानम् |
| दुर्जनः | सुजनः | स्नेहः | द्वेषः |
| धीरः | भीरुः | उद्यमः | आलस्यम् |
| मित्रम् | शत्रुः | श्रद्धा | अश्रद्धा |
| बली | दुर्बलः | यशः | अपयशः |
| नदी | सूर्यः | मरुत् | नक्षत्राणि |
| पर्वतः | चन्द्रः | पल्वलम् | स्वर्भानुः |
| समुद्रः | द्यौः | तडागः | वापी |
| मेघः | पृथिवी | उदयः | अस्तमनम् |
| पुरम् | ग्रामः | गृहम् | वनम् |
| धनम् | तृणम् | वृक्षः | लता |
| वस्त्रम् | भूषणम् | अन्नम् | पानम् |
| रथ्या | आरामः | शाला | कुट्टिमम् |

याचकः कविः ज्ञातिः आश्रमः
प्रभुः पण्डितः सुहृत् पर्णकुटी
वृक्षः तटः पादपः विटपी
शाखा पर्णम् फलम् पुष्पम्
कोटरम् नीडः पक्षी लता
वल्लरी कण्टकः छाया मूलम्
स्कन्धः शिखरः दारु फलकम्
यष्टिः दण्डः काष्ठम् त्वक्
दवानलः वात्या आरण्यकः परशुः
आलवालम् खद्योतः दंशः कपिः
भुजङ्गमः दलम् किसलयम् मुकुलः
नालिकेरः शाल्मली पनसः प्लक्षः
पूगः न्यग्रोधः वटः पिप्पलः
तिन्त्रिणी अश्वत्थः मल्लिका माधवी
ताम्बूली आम्रः द्राक्षा लवङ्गः
अरण्यम् निषादः पुलिन्दः धनुः शरः
गिरिः निर्झरः प्रदरः सिकता लोष्टम्
दृषद् प्रवाहः सलिलम् सरः

## ॥ वाक्याभ्यासः ॥

(1)

बालः पठति । वृद्धः वदति ।
साधुः नन्दति । खलः निन्दति ।
राजा रक्षति । चोरः हरति ।
बुधः तुष्यति । मूर्खः कुप्यति ।
आढ्यः दृप्यति । दरिद्रः याचते ।
सुजनः दयते । दुर्जनः पीडयति ।
बली वर्धते । दुर्बलः नश्यति ।
धीरः विजयते । भीरुः पलायते ।
शिशुः रोदिति । कुमारः हसति ।
मित्रम् उपकरोति । शत्रुः अपकरोति ।

(2)

विशाला नदी । महान् पर्वतः ।
अगाधः समुद्रः । गगनं महत् ।
विपुला पृथिवी । निरवधिः कालः ।
चन्द्रः शीतलः । सूर्यः उष्णः ।
गहनं वनम् । मन्दः मारुतः ।
उन्नतं गोपुरम् । कठिना शिला ।
मकरः भीषणः । वृकः क्रूरः ।
हंसो दर्शनीयः । काकः विकृतः ।

गोमायुः धूर्तः । अजः साधुः ।
किंकरः कुशलः । स्वामी जडः ।

(3)

देवं प्रणमति । सुवर्णम् अपहरति । धनं ददाति । गानं शृणोति । पाठं वाचयति । अलेख्यं लिखति । कथां कथयति । कार्यं स्मरति । भूषणं धारयति । अगारं प्रविशति । आदर्शं पश्यति । पुस्तकं गृह्णाति । ग्रामं गच्छति । भारं वहति । वृक्षम् आरोहति । कन्दुकं क्षिपति । पानं पिबति । मोदकं खादति । धेनुं बध्नाति । पुत्रमाह्वयति । उद्यमं करोति । आलस्यं मुञ्चति । सुखम् आप्नोति । दुःखं तरति । शकटम् आनयति । मन्त्रं जपति । स्तेनं दण्डयति । भृत्यं प्रेषयति । भिक्षाम् अटति । वेदम् अधीते ।

(4)

इदं पुरं रम्यम् । अयं ग्रामः समृद्धः । इयं रथ्या विशाला । असौ मार्गः कुटिलः । सः

भटः शूरः। सा सेना महती। तत् राजगृहं मनोहरम्। कः अयं बालकः। कश्चित् देवकुलं प्रविशति। काचित् स्त्री आगच्छति। एषः न बिभेति। किं एतत् पुस्तकम्। एषा दिक् प्रतीची। कस्त्वम्। अहं वररुचिः। सर्वः सर्वं न जानाति॥

(5)

गौः तृणं भक्षयति। वटुः भिक्षां गृह्णाति। प्रभुः वस्त्रं क्रीणाति। कन्या भूषणं वाञ्छति। पण्डितः पुस्तकं वाचयति। विप्रः अन्नम् अश्नाति। दावानलः काननं दहति। स्थविरः यष्टिम् अवलम्बते। स्वर्भानुः चन्द्रं ग्रसति। पिकः पञ्चमं गायति। काकः बलिं भुङ्क्ते। सिंहः हरिणं हन्ति। कपिः नालिकेरं भिन्ते। सत्येन यशः प्राप्नोति। अनृतेन च अयशः। धर्मेण सुखं लभते। पापेन दुःखम् अश्नुते। उद्यमेन कार्यं सिध्यति। आलस्यात् कार्यं क्षीयते। मारुतेन पर्णानि चलन्ति। वापी पद्मैः विराजते।

प्रवहणेन प्रभुः याति। निषादः वराहं शरेण विध्यति न्यग्रोधः शाखाभिः विष्वक् व्याप्नोति।

(6)

राजा कविभ्यः धनानि ददाति। भृङ्गः आरामे भ्रमति। तापसः आश्रमे वसति। पक्षी कोटरे शेते। पादपः तटे रोहति। वसन्ते पुष्पाणि विकसन्ति। आलवाले जलं नास्ति। मल्लिका ग्रीष्मे फुल्लति। मयूरः वर्षासमये नृत्यति। गुहायां भल्लूकः स्वपिति। राजानः मञ्चेषु निषीदन्ति। आकाशे नक्षत्राणि विलसन्ति। पल्वले जलं स्वल्पम्। कूपस्य सलिलं कटु! सभायां पण्डितः वक्ति। दीर्घिकायां जनः स्नाति। प्रासादात् नृपः अवतरति। दीनः वीथीषु अटति। मन्दुरायाम् अश्वः तिष्ठति। सूर्यस्य प्राच्याम् उदयः; प्रतीच्याम् अस्तमनम्। दिक्षु तमः प्रसरति। विद्वान् विनीतो भवति॥

॥ नारायणाय नमः ॥

## PART II. द्वितीयो भागः ।

### पाठः १.

केशवदासस्य सुतः
  शार्ङ्गरवः शारदा च तद्दुहिता ।
पुस्तकमादायोभौ
  प्रातर्यातः कलाशालाम् ॥

कुमार कस्त्वम् ।
आर्य, शार्ङ्गरवोऽहम् ।
कस्य त्वं पुत्रः ।
केशवदासमिश्रस्य ।
क्व यासि ।
पाठशालां यामि ।
कस्तवोपाध्यायः ।
मुरारिमिश्रः
किमिदं पुस्तकम् ।
संस्कृतोपक्रमपाठावलिर्नामेदं पुस्तकम् ।
किमियं दारिका ते भगिनिका ।
आम ।
किमस्या नाम ।
शारदा इति ।
इयमपि किं पाठशालां व्रजति ।
अथ किम् ।
विद्यावाप्तिरस्तु युवयोः ॥

## पाठः २.

संवत्सरस्य द्वादश मासाः । षट् च ऋतवः । एकैकस्य ऋतोर्द्वौ मासौ । ऋतुषु प्रथमो वसन्तः । द्वितीयो ग्रीष्मः । ततः प्रावृट् । अनन्तरं शरत् । पश्चाद्धेमन्तः । अन्ते शिशिरः ॥ वसन्तश्चैत्रवैशाखयोर्मासयोः प्रवर्तते । अन्ये च ऋतवः क्रमेण भवन्ति । वसन्ते पुष्पाणि विकसन्ति । ग्रीष्मे सलिलानि शुष्यन्ति । प्रावृषि मेघो वर्षति । शरदि दिशः प्रसीदन्ति । हेमन्ते तुहिनं पतति । शिशिरे शीतं बाधते ॥

---

## पाठः ३.

अयं वसन्तः । वसन्तः सुभगः समयः । तस्मिन् जनाः मोदन्ते । महोत्सवानारभन्ते । कुतः । तदानीं फुल्लन्ति पुष्पलताः । फलन्ति चूतादयः शाखिनः । कूजन्ति पिकाः । झङ्कुर्वन्ति द्विरेफाः । वाति मन्दमारुतः ॥

उक्तं किल कविना :—

द्रुमाः सपुष्पाः सलिलं सपद्मं
स्त्रियः सुवेषाः पवनः सुगन्धिः ।
सुखाः प्रदोषा दिवसाश्च रम्याः
सर्वं सखे चारुतरं वसन्ते ॥

---

## पाठः ४.

अयं वर्षाकालः। व्योम्नि जलधरा गर्जन्ति। सूर्यो न प्रकाशते। वृष्टिः पतति। भूरार्द्रा भवति। रथ्यासु जलं प्रवहति। जनाश्छत्रं धारयन्ति। शीतो वायुर्वाति। अथ वर्षो विरमति। वृक्षेभ्यः स्थूला जलबिन्दवः पतन्ति। जनाः गृहेभ्यः निर्यान्ति। जन्तवः सञ्चरन्ति। व्योम विराजते। भानोः किरणाः पुनः प्रसरन्ति। जगदखिलं रम्यं दृश्यते॥

---

## पाठः ५.

इयं शरत्। संप्रति अपयाता जलधराः; विरता विद्युतः; शान्ता अशनिरवाः; प्रलीनं इन्द्रधनुः; चामरवत् पाण्डराः विरला एव मेघाः वियति मारुतेन उद्धूयन्ते।

सरसीषु हंससारसादयः पक्षिणः कलं कूजन्ति। पद्मानि श्रिया विराजन्ते। प्रतपति दुःसहः सहस्रभानुः। रात्रिषु निर्मले गगने विलसन्ति तारकाः। शीतकिरणः चक्षुष्मतां प्रीतिं वर्धयन् विद्योतते। पक्वाः शालयः फल-भरेण नम्रा भवन्ति। कीराः यवाङ्कुरानादाय प्रचरन्ति। सारसाः आकाशे पंक्तिं रचयन्ति। उदिते चागस्त्यर्क्षे अम्भांसि प्रसीदन्ति। गाः शाद्वलस्थलीषु चारयन्तो गोपाः छायावृक्षानुपाश्रित्य गायन्ति नृत्यन्ति च॥

---

## पाठः ६.

अस्ति कोऽपि बालकः । तस्य मातामही तं ब्रूते ।
जात, हस्तौ ते दर्शय ।
मातामहि, हस्तौ मे काकेनापहृतौ ।
काकः कुत्र ?
तिन्त्रिणीवृक्षस्य शाखायां तिष्ठति ।
कुत्र तिन्त्रिणीवृक्षः ?
छिन्नः ।
तस्मिन् छिन्ने काष्ठानि क्व ?
दग्धानि ।
दग्धेषु तेषु भस्म क्व ?
दन्तधावनार्थं पथिकैर्गृहीतम् ।
तेन हि दन्तधावनोपयुक्तं जलं क्व ?
तेन शाद्वलानि प्ररूढानि ।
शाद्वलानि क्व ?
गजेनाश्वेन च कवलितानि ।
गजः क्व ?
राजद्वारे तिष्ठति ।
अश्वः क्व ?
दुर्गद्वारे तिष्ठति ।
अहो मातामहि, पश्य, पश्य, प्रत्यागतौ मम हस्तौ ॥

---

## पाठः ७.

इदमुद्यानम्। एहि अस्मिन् पर्यटनं कुर्वः। किमत्र पुरः पश्यसि।

अयमाम्रतरुः।

अस्य फलसमृद्धिं पश्य। विटपे विटपे फलानां गुच्छाः लम्बन्ते। हन्त दिष्ट्या फलमेकं तवाग्रे पतितम्। अतिपक्वं फलं स्वयमेव वृन्तात् श्लथं भवति। गृहाणैतत्। किमस्ति छुरिका।

अस्ति। गृह्णातूपाध्यायः।

अनया च्छुरिकया फलमेतत् खण्डशः करोमि। आस्वादयामुं खण्डम्।

आम्रफलं स्वादु।

एतदिव स्वादु अन्यत् किमपि फलं ब्रूहि।

पनसफलम्।

न तावत् पनस-बदर-जम्बू-खर्जूर-मोचा-द्राक्षादीनां फलानि आम्रफलस्य तुल्यानि। तथापि पनसमपि स्वादु। पनसोऽप्याम्र इव ग्रीष्म एव फलितो भवति। तदेहि पनसतरुषण्डं पश्यावः।

आम्रेष्वपि कानिचित् अतिमात्रमम्लानि सन्ति।

यथा मनुष्येषु दुर्जनाः। ते च प्रायशः। गुणिनः मधुरमाकन्दफलवत् विरलाः एव भुवने ॥

---

## पाठः ८.

भद्र सात्यके, किं करोषि ।

अहं रामायणे संक्षेपसर्गं पठामि ।

कीदृशी लिपिः अस्मिन् पुस्तके ।

देवनागरी लिपिः ।

सैव रमणीया । सुखेन च वाच्यते । सात्यके कुत्र ते यवीयान् भ्राता श्रीपतिः ।

श्रीपतिः अन्तरास्ते । कीदृशोऽस्य व्यापारः ।

सः संस्कृतपाठं लिखति ।

साधु । लिखितपठिता हि विद्या सुप्रतिष्ठिता भवति । अथ रामिलो ब्रवीति—"वयं विद्यार्थिसभायाः प्रसक्तिषु गीर्वाण-भाषयैव प्रवचनं कुर्मः" इति । अपि तथ्यमेतत् ।

यथाकथञ्चित् संस्कृतमाश्रित्य वदामः । किन्तु कियदस्माकं तत्र कौशलम् ।

भवतु तावत् । परिचयेन दृढं कौशलं भविष्यति । यां भाषां अभ्यस्यामः तया भाषया व्यवहारोऽपि कर्तव्यः । एवं कृते पुस्तकविद्या प्रयोगतः साफल्यमश्नोति ॥

---

## पाठः ९.

सखे शिवस्वामिन्, कुत आगच्छसि ।

स्वगृहात् । कुत्रप्रस्थितोऽसि ।

रामानुजस्य गृहम् ।

कुत्र तद्गृहम् ।

मध्यमवीथ्याम् ।

किं युवां कुरुथः ।

आवां गणितशिक्षामभ्यस्यावः । स खलु गणिते प्रवीणः ।

तेन हि मिथः युवयोरुपकारो भवति; तस्मात् त्वं गणितं, त्वत्तश्च स संस्कृतं शिक्षते इति ।

तथा । कुत्र भवान् गच्छति ।

नागरिकग्रन्थागारं गच्छामि । अचिरप्राप्तानि पुस्तकान्यवलोकितुम् ।

भवान् हि ग्रन्थरुचिः । न स ग्रन्थस्तस्मिन्नगारे विपुलेऽपि, यः भवता न प्रागेव पठितः । तद्गच्छतु भवान् पुनर्दर्शनाय ॥

---

पाठः १०.

पद्मिनि, एहि कन्दुकेन क्रीडावः ।

सुन्दरि, प्रियं मे । क्षिप कन्दुकम् । अहं गृह्णामि ।

पद्मिनि, भवत्विदानीमन्या क्रीडा । तले प्रहृत्य कन्दुकेन क्रीडावः ।

सुन्दरि, कियच्चिरं त्वमेव क्रीडासि । न मह्यं ददासि ।

पद्मिनि, त्वमपि मम क्रीडाविच्छेदे जाते गृहीत्वा कन्दुकं क्रीडिष्यसि ।

सुन्दरि, अपविद्धः कन्दुकः । विच्छिन्ना ते क्रीडा ।

पद्मिनि, अनुद्रुत्य गृहाण कन्दुकम् ।

सुन्दरि, कुत्र कुत्र कन्दुकः ।

सुन्दरि, पद्मिनि, कुत्र कुत्र कन्दुकः ।

गोवर्धन, देहि देहि कन्दुकम् । त्वमेवास्य चोरः ।

सुन्दरि, मा तावत् । पद्मिनी खलु त्वद्धस्तादपराद्धं कन्दुकं अनुद्रुत्य गृहीतवती । अन्तर्गृहादागच्छता मया आभुग्नपूर्वकाया इयं कन्दुकं देहलीप्रान्तादादाय अंशुकमध्ये निगूहन्ती सम्यगुपलक्षिता । गृह्यतामियं चोरिका ।

पद्मिनि, एवं गोवर्धनो वदति । बालो मुग्धमुखोऽसौ किमलीकं भणिष्यति । प्रदर्शय कन्दुकम् । एहि त्वमेव क्रीडिष्यसि ।

सुन्दरि, किं मुधा मयि शङ्कसे । असौ किं गोवर्धनो मुग्धमुखः । बालधूर्तकः खल्वसौ । अविश्वसनीयः । अनेन कति कति दुश्चेष्टितानि प्रत्यहं न चेष्ट्यन्ते । कति वारानसौ न दण्डितः पित्रा ।

पद्मिनि, चोरिके, किं मां मिथ्या अपवदसि । प्रतिपालय माम् । पितुस्त्वामीदृशकारिणीं निवेद्य त्वदुत्सेकं हापयिष्यामि ।

गोवर्धन, दिष्ट्या पिता चात्रैवागच्छति । एह्येहि । तत्वं स्फुटीभविष्यति ।

सुन्दरि, पद्मिनि, अयं वां कन्दुकः । एष क्षिप्त्वा प्रपलायितोऽस्मि ॥

---

## पाठः ११.

भृगो, एह्येहि । अतिक्रामति किल पाठशालागमन-वेला । अम्ब, कुत्र भृगुः ।

कौत्स, प्रतिपालय । त्वरयामि तावत् भृगुम् ।

मातः, कौत्सो व्रजतु । नाहमद्य पाठशालां गमिष्यामि ।

कुतः ।

शिरोवेदना मां बाधते ।

किमलीकं मन्त्रयसे । इदानीमेव शष्कुलीराशिं कट-कटाकृत्य भक्षयसि । कुतस्ते शिरोवेदना । व्रज शीघ्रम् । कौत्सस्त्वां प्रतिपालयति ।

मातः, उपाध्यायः पूर्वदिनपाठान् प्रक्ष्यति । न मया तेऽनुचिन्तिताः । तेन बोध्यमानेष्वपि तेषु न मया दत्तमव-धानम् । इदानीं वेत्राहतिमनुभवितुं नाहं पाठशालां गमि-ष्यामि । उपाध्यायः खलु निष्ठुरतमः ।

भृगो, अति हि लज्जाकरं ते वचनम् । गुरुमपवदन् स्वदोषमेव हि ख्यापयसि । यदि तावत् पाठान् सम्यगधि-गच्छसि ततः किं उपाध्यायः त्वयि क्रूरो भवति । किमस्य कस्मिंश्चिद् द्वेषः । अन्यस्मिन् पक्षपातो वा ।

मातः, तस्य निकामं कौत्सादिषु पक्षपात एव दृश्यते । मादृशेषु च मत्सरः ।

उपपन्नम् । यस्मात् कौत्सः दृढमुद्यमी सुवृत्तो विनीतः। पाठान् यथाकालमधीते । प्रश्नकाले च न शून्या दिशो निरीक्षते ।

बाढम् । न तु मातः सर्वोऽपि कौत्सः । तं तावत्तस्य पिता गृहेऽपि शिक्षयति पाठान् । अपि च कौत्सो मेधावी । सकृत् श्रुतमपि धारयते । नैवं शोभितुं शक्यं मादृशानाम् ।

भृगो, ईदृशानि भणन् नूनं त्वं विस्माययसि माम् । यत् सकृत् श्रुतं धारयते कौत्सः तत् त्वमपि द्विः त्रिः श्रुतमनुचिन्तितं च किं न धारयिष्यसे । किं मुधा वाक्प्रपञ्चेन । अलसानां व्याजजल्पितान्येतानि । मैवं जाल्मो भव । उत्तिष्ठ । किन्न लज्जसे एवं आत्मनः असामर्थ्यमुपपादयन् । यद्युत्साहः, उत्साहानुरूपश्चोद्यमः।किं कस्य दुःसाधं भवितुमर्हति। अन्यच्च, यदि उपाध्यायदण्डात् बिभ्यादिह स्थास्यसि, त्वत्पिता अवगतार्थः द्विगुणं त्वां दण्डयिष्यति । किञ्च श्वः प्रभाते यदि पुनरुपाध्यायस्य मुखं द्रष्टव्यं तदानीं कः प्रतीकारः । अथवा किं पर्यध्ययनः शाकटिको वर्तिष्यसे ।

मातः, अवितथं ब्रूषे कोऽत्र प्रतीकारः ।

भृगो, कौत्सस्य साहचर्येण सुविहितः प्रतीकारस्तव भविष्यति । मा बिभिहि । व्रजाद्य पाठशालाम् । सुजनः खलु कौत्सः । स तावत् व्यपोहयिष्यासि ते कालुष्यम् । जहि आलस्यम् । श्रद्धया अवधत्स्व आचार्योक्तिषु । दैनन्दि-

नान् पाठाननवशेष्य कौत्सेन चोपकृतः सम्यगधीष्व। प्रियो भव उपाध्यायस्य। मानितो भव सहाध्यायिनाम्। क्रमेण च पाण्डित्यमधिरूढो नन्दय पितरौ।

मातः गृहीतं वचनम्। एषोऽस्मि नूतनो भृगुः। सखे कौत्स, चिरं विलम्बः कृतः। तत्क्षमस्व। अयमहमागत एव॥

---

पाठः १२.

अयि भोः! छात्राः अद्य सुदिवसोऽस्माकं संपद्यते। यतः महामहोपाध्याय—श्रीविद्याचक्रवर्तिमहाभागाः अस्मत्कक्ष्यासमीक्षार्थं आगमनानुग्रहं करिष्यन्ति। तेषां पुरः युष्माभिः समञ्जसं व्यवहर्तव्यम्। शब्दार्थशुद्धिरनुपालनीया। तदर्थं चेमं श्लोकं शब्दार्थविवेकपुरःसरमवधारयध्वम्।

अथ तौ देशकालज्ञौ राजपुत्रावरिंदमौ।
देशे काले च वाक्यज्ञावब्रूतां कौशिकं वचः॥

माठर, त्वमनुवाचयेमं श्लोकम्।

अहो अस्पष्टता वर्णोच्चारणस्य। दुर्योजना पदानाम्। अस्थाने च विभागः। सुबन्धो, ब्रूहि तावत्।

आचार्य, नाहं सुबन्धुः। सुमतिरस्मि।

बाढम्। सुमते, पठैनं श्लोकम्।

अति त्वरितं ते पठनम्। अपि च तारस्वरेण पठसि। अनुनासिकप्रायं च तवोच्चारणं दुष्यति।

भवतु । श्रीपतिं नियोक्ष्ये ।

साधु श्रीपते साधु । स्पष्टघनेन स्वरेण संस्कारशुद्धिमत्या गिरा वाचनीयम् संस्कृतवचनम् ।

ननु गोमुख, पदच्छेदं ब्रूहि श्लोकेऽस्मिन् । किं "अथतौ" इत्येकं पदम् । कात्यायन किं मन्यसे ।

गुरो, "अथत्" शब्दस्य प्रथमाद्विवचनम् । "अथत् अथतौ अथतः" ।

श्रीपते, कुतो हससि ।

आचार्य, अथ इत्यव्ययम् । "तौ" इति सर्वनामाख्यस्य दकारान्तपुल्लिङ्गस्य "तद्" शब्दस्य प्रथमाद्विवचनम् ।

श्रीपते, ब्रूहि पदच्छेदस्य शेषम् ।

अरिंदमौ इत्येकं पदम् । विनायक, "वचः" शब्दस्य किं बहुवचनम् ।

वचः वचौ वचाः ।

अहो मौग्ध्यम् । सुमते त्वं ब्रूहि ।

वचः वचसी वचांसि ।

कावत्र कर्तारौ । तौ राजपुत्रौ । कीदृशौ । देशकालज्ञौ । वाक्यज्ञौ च । किं कर्म । "वचः" । "कौशिकं" च । किं क्रियापदम् ! "अब्रूताम्" । द्विकर्मकोऽयं ब्रूधातुः । कोऽयं लकारः प्रयुक्तः । लङि प्रथमपुरुषद्विवचने रूपम् "

इदानीं अन्वयः प्रोच्यते । "अथ तौ देशकालज्ञौ अरिंदमौ वाक्यज्ञौ राजपुत्रौ देशे काले च कौशिकं वचः अब्रूताम्" अतःपरं पदार्थः, ततश्च तात्पर्यार्थः वर्णयिष्यते । अवसितः कालावयवः । श्वः पूर्वाह्णे भूयः संस्कृतहोरायां संप्रवक्ष्यामि । साधयामस्तावत् ।

---

पाठः १३.

इदं व्योम । एतदखण्डम् । नीलवदाभाति । व्योम्नि द्वादश राशयः कल्पिताः । अस्मिन् व्यवस्थितानि सप्तविंशतिः नक्षत्राणि । अस्य पथा सञ्चरन्ति नव ग्रहाः । सूर्याचन्द्रमसौ ग्रहनायकौ । सूर्यस्यास्तोदयाभ्यां दिनानि गण्यन्ते । चन्द्रस्य चारवशात् तिथयः कल्प्यन्ते । रवीन्द्वोरभावे लोकस्तमसा आवृतो भवति । तमसि तारा विद्योतन्ते । अगणिताभिरपि ताराभिरालोको न भवति । किन्त्वेक एव चन्द्रमाः सान्द्रं तमो हन्ति । चन्द्रमसो मरीचयः शीतलाः । आदित्यः उष्णरश्मिः ॥

द्वादशराशीनां मध्ये मासि मासि एकमेकं राशिं लङ्घयति भास्करः । संवत्सरेण चैकामावृत्तिं पूरयति । सूर्यस्य रथमित्थं वर्णयन्ति पौराणिकाः । तस्यैकमेव चक्रम् । सारथिरनूरुः । ईदृशेन रथेन रवेर्गन्तव्योऽध्वा निरवधिर्गगनाभोगः । तत्र च कालनियमः । दिवसस्यैकवारं संपूर्णोऽध्वा लङ्घयितव्यः ॥

अत्र च कश्चन कविराह—

रथस्यैकं चक्रं भुजगयमिताः सप्त तुरगा
निरालम्बो मार्गश्चरणविकलः सारथिरपि ।
रविर्यात्येवान्तं प्रतिदिनमपारस्य नभसः
क्रियासिद्धिः सत्वे भवति महतां नोपकरणे ॥

चन्द्रः मासमात्रे राशिमण्डलं सकृत् पर्येति । सद्वित्रिदिनान्येवैकस्मिन् राशौ तिष्ठति । तं अमृतमन्थे समुद्राज्जातं लक्ष्मीसहोदरं प्राहुः पौराणिकाः । तस्य मध्ये दृश्यमानस्य कलङ्कस्य स्वरूपमित्थं विविनक्ति विल्हणकविः—

अङ्कं केऽपि शशङ्किरे जलनिधेः पङ्कं परे मेनिरे
सारङ्गं कतिचिच्च सञ्जगदिरे भूच्छायमैच्छन् परे ।
इन्दोर्यद्दलितेन्द्रनीलशकलश्यामं दरीदृश्यते
तत्सान्द्रं निशि पीतमन्धतमसं कुक्षिस्थमाचक्ष्महे ॥

---

## पाठः १४.

कपिञ्जल, कुतस्ते कालहरणम् । आचार्य, अद्य मातुलो मामाज्ञापयति "एतासामाह्वानपत्रिकाणां ग्राहकनिर्देशं लिख" इति । तेनास्मि विलम्बितः ।

किमन्तरेणाह्वानपत्रिका ।

मातुलस्य दुहितुः शीलवत्याः उद्वाहमन्तरेण ।

कस्मै शीलवती प्रदीयते । मदग्रजाय सोमशर्मणे ।

कुत्र वसति सोमशर्मा । स कैरवक्षेत्रे निवसति ।

के चान्ये तत्र निवसन्ति ।

मे पितरौ भ्रातरः सोदर्या, पितामहः, पितामही, पितृव्यः, पितृष्वसा इत्येते अन्ये च कुटुम्बजनाः तत्र निवसन्ति ।

अपि त्वमस्यां नगर्यां मातुलगृहे वससि ।

अथ किम् ।

मातुलस्य त्वं कीदृशः भागिनेयः ।

त्वदग्रजः इतःपरंजामाता च । भवतु । शीलवत्याः सोमशर्मा कीदृशः ।

पितृष्वस्रेयः ।

इतःपरं पतिः । सा च तस्य पत्नी । तव च प्रजावती त्वत्पित्रोश्च सा वधूः । कपिञ्जल, विष्णुरातः तव कथम् ।

पितृव्यपुत्रः ।

पितुर्भ्रातृव्यः । स हि मन्ये, यस्तव पितुः ज्यायान् भ्राता हरिशर्मोपाध्यायः, तस्य पुत्रः ।

तथा । सोऽप्यहमिव इहैव मातुलगृहे वसति । उपाध्याय, मातामहो भणति "तवोपाध्यायस्यापि इदानीमेवाह्वन-पत्रिकां दत्वा सप्ताष्टौ विश्रमदिवसानप्यनुज्ञाप्य लब्ध्वागच्छ" इति ।

अपि ते मातामहः कल्यशरीरो वर्तते ।

वार्धक्यादकल्य एव वर्तते। इयं च वः आह्वानपत्रिका। भवतु। आनुज्ञायन्ते ते विश्रमदिवसाः। वयमप्युद्वाहमहोत्सवं यथासमयमनुभवितास्मः। स्वैरं प्रयाहि पुनर्दर्शनाय ॥

---

॥ बान्धवपट्टिका ॥

---

## पाठः १९.

वैशम्पायन, कुत्र त्वं त्वरितो व्रजसि।

कपिञ्जल, एह्येहि; अद्य खलु भगवतो वसन्तयात्रायां रथोत्सवः। शृणोषि जनानामारवम्। शृङ्गाणां तारप्लुतं ध्वनिम्। ढक्कानां पटपटशब्दम्। डमरुकाणां निनादम्।

किमद्य जनास्तपति तपनेऽपि मिलिताः अत्र कुर्वन्ति।

रथप्रस्थानाय यतन्ते । पश्य, स्थूलाभिः रज्जुभिः परिवेष्टितो रथः । एताः रज्जूः जनाः गृह्णन्ति । दृढमवष्टभ्य सप्रयत्नं विकर्षन्ति च । अथ रथः स्थानात् मन्दमन्दं विचलति ।

अहो कठोरः स्फोटशब्दः ।

अयमग्निचूर्णस्फोटः । आश्चर्यमाश्चर्यम् । संप्रस्थितो रथः । डोलायन्ते रथस्याग्रे निबद्धास्तुरङ्गमाः । शब्दायन्ते रथावलम्बिन्यः किङ्किण्यः । वर्धते जनानामारवः । प्रसरन्ति तूर्यकाहळादीनां वाद्यानां घोषाः । अहो कोलाहलमयं जगदनुभूयते ।

सखे, व्रजाग्रतः शीघ्रम् । अत्र तुमुलो जनसंमर्दः परापतति ॥

---

## पाठः १६.

अयं आषाढो मासः । इदानीं नद्याः प्रवाहो वर्धते । प्रवाहं दृष्ट्वा कृषीवलाः कृषिकर्मणि प्रवर्तन्ते । आषाढमासि अष्टादशे दिने अतिप्रवृद्धः पूरः तटमपि प्लावयति । तस्मिन् दिने प्रातः कुलयोषितः नद्याः पूजां आचरन्ति । चित्रान्नानि कदलीफलानि च नदीदेवतायाः निवेद्य निजार्भकेभ्यः तीर एव ददति ।

प्राप्ते तु श्रावणे मासे पुनरतिमात्रं प्रवृद्धः नदीपूरः क्वचित् क्वचित् तटं भित्वा क्षेत्रारामग्रामान् निमज्जयति ।

कदाचित् सस्यानां द्रुमाणां गोवृषच्छागादीनां गृहणां मनुष्याणामपि प्रलयो भवति। तस्मिन् पूरप्लवे प्रवृत्ते उदकमयं भुवनं दृश्यते। धूमशकटादीनामपि गत्युपरोधो भवति।

प्राप्तायां शरदि सरितः पुलिनवत्यो गाधतरा जायन्ते।

---

॥ नदीचर्या ॥

एहि शम्भो नदीं यावः पुण्यां ग्रामविसर्पिणीम् ।
या नः पूरयते क्षेत्रवापीकूपजलाशयान् ॥
वन्दस्व सरितं देवीं सायं प्रातः समाहितः ।
पुनाति सा नः संहृत्य बाह्याभ्यन्तरमामयम् ॥
अस्याः शृणु कथां शम्भो मर्त्यधर्मानुसारिणीम् ।
नानाचित्रचरित्राढ्या दीव्यत्येषा हि भूतले ।
जाता संलालिता चैषा दरीपर्वतपालिषु ।
प्राप्तचङ्क्रमणा स्निग्धच्छायासु वनभूमिषु ॥
आदौ बुद्बुदमात्राभा कुतोऽप्यारब्धनिर्गमा ।
स्पन्दमाना ह्रदीभूय शनैर्निर्याति सारणी ॥
लङ्घयन्ती ततो वेगाद्गिरीनपि दरीरपि ।
धावत्युत्पतति क्रीडत्यद्रिकूटात्पतत्यपि ॥
सा प्रपत्य प्रपत्यैव कटकेष्ववरोहिणी ।
मध्ये मार्गागतैरन्यैरासारैः समुपेयुषी ॥

विशालसुभगाकारा प्रवहन्ती भुवस्तले ।
प्रविशत्यध्वनि ग्रामान् क्रीडासक्तकुमारकान् ॥
एवं वितीर्य लोकानां जलं सस्यविवर्धनम् ।
नदी सिन्धुमवाप्नोति सतां सूक्तिरिवेश्वरम् ॥
आढ्यं दरिद्रमथवा पूतं पातकिनं च वा ।
सा पुनात्यविशेषेण ग्रामे ग्रामे पुरे पुरे ॥
नद्याः शुभाया इव ते जीवयात्रा प्रवाहिणी ।
शम्भो परोपकारेण सार्थक्यं गन्तुमर्हति ॥

॥ इति शम्भुचर्योपदेशे नदीचर्या ॥

---

## पाठः १७.

**अगजाननपद्मार्कं गजाननमहर्निशम् ।**
**अनेकदं तं भक्तानामेकदन्तमुपास्महे ॥**

आयुष्मन्, भूरिवसो, श्लोक एष त्वया हृद्गतः कर्तव्यः ।

तात, प्रागेव जानाम्येनं श्लोकम् । येन अयं असद्गुपाध्यायमुखाच्छ्रुतेषु ध्यानश्लोकेषु अन्यतमः । तत्कोऽस्येदानीं प्रसङ्गः ।

श्वःकिल विनायकचतुर्थीपुण्यदिवसः । तदा अनेन ध्यानश्लोकेनोपस्थातव्यो देवः ।

तात, कथमेकदन्तो विनायकः ।

अस्त्यत्र पौराणिकी कथा । पुरा मोदकप्रियो विघ्नेश्वरः गृहाद्गृहं पूजां गृहीत्वा उदरपूरं मोदकानशित्वा पथि मन्थरं प्रसरन् क्वचित् मुद्गक्षेत्रे स्तम्बाग्रात् कराञ्चलेन मुद्गाञ्जलिं जग्धुं जग्राह । तदा शुक्लचतुर्थीचन्द्रः प्रतीच्यां लब्धोदयः तं परिजहास—

भुक्तैर्गृहश्रेणिषु मोदकानां भारैरपारैः स्फुटतीव कुक्षिः ।
तथापि मुद्गेषु रुचिस्तवेयं हासाय लम्बोदर चापलं ते ॥

इति ।

तदात्वे समुन्नम्य दृशौ परिहासविकसितवदनं चन्द्रं पश्यतो गणनाथस्य तथा क्रोधः पुस्फोर यथा सोऽन्यप्रहरणाभावात् स्वमेव दन्तमेकमुत्कृष्य तं प्रहतवान् । तदाप्रभृत्येकदन्तो जातः ।

एवं न्वेतत् ।

अथान्येयं च कथा । पुरा भगवान् व्यासः भारतं चिकीर्षन् लेखकं गणपतिमेव वव्रे । कोऽन्यः शतसहस्रं श्लोकानां अविच्छेदेन मनःकल्पेन च जवेन वक्तुः पुरतो लिखितुं क्षमेत । तत्र च कार्यगौरवात् वक्त्रादपकृष्टः वज्रादपि कठिनः स्वदन्तकाण्ड एव लेखिनीकृतः कुञ्जरास्येन । विनायकं लेखकं प्राप्य व्यास एव श्लोकधाटीपरिस्खलनेनासकृद्विषसाद । न क्वापि विनायकः विलेखनमन्थरे

बभूव । अपरं च, अतित्वरितं पठितश्लोकान् विलिख्य "कथय कथय" इति वक्तारं प्रणुनोद । तेन च नितरामुद्वेजितो व्यासः समादिक्षत् । "अर्थज्ञानं विना लेखनं व्यर्थम्" इति । विनायकः—"अहो महान् भारः । अवबुध्यते अर्थः । ब्रूहि पुरस्तात् । मा चिरम्" इति त्वरयामास । ततश्च व्यासः यदा क्वचित् श्रान्तः तदा श्लोकग्रन्थिं निवेश्य कवयामास । अर्थं चिन्तयति च। विनायके विश्रम्य पुनरुत्सहमानः काव्यं जग्रन्थ ।

अहो देवसंघेषु दुर्ललितो विनायकः ।
अत एव त्वमिव मे प्रियः ॥

---

## पाठः १८.

ततः प्रविशतः गौतमकाश्यपौ ।

**गौतमः**—काश्यप, कुतो दूरतो महान् जनसङ्घो दृश्यते । अस्ति मे कुतूहलं तत्र गन्तुम् ।

**काश्यपः**—सखे, गौतम, किं न जानीषे । अद्य खलु विजयदशमीयात्रा देवस्य । तदेहि तत्रैव गच्छावः ।

**गौतमः**— कीदृशी यात्रा । न खलु जानामि ।

**काश्यपः**— तर्हि कथयामि । शृणु तावत् ।

**गौतमः**—अवहितोऽस्मि ।

**काश्यपः**—वर्षासमयस्यान्ते राजानः शत्रून् जेतुं प्रतिष्ठन्ते । वर्षासमयो न प्रयाणस्य योग्यो भवति । शरदि तु घनः

सुतरां । पन्थानश्चन्द्राभिरामाः । जलदैर्निर्मुक्ता दिशो विशदाः । उक्तं च कविना—

काशैर्मही शिशिरदीधितिना रजन्यो
हंसैर्जलानि सरितां कुमुदैः सरांसि ।
सप्तच्छदैः कुसुमभारनता वनान्ताः
शुक्लीकृतान्युपवनानि च मालतीभिः ॥

अपि च-

शरदि कुमुदसङ्गाद्वायवो वान्ति शीता
विगतजलदवृन्दा दिग्विभागा मनोज्ञाः ।
विगतकलुषमम्भः श्यानपङ्का धरित्री
विमलकिरणचन्द्रं व्योम ताराविचित्रम् ॥

गौतमः—सखे, सत्यमेवमेवैतत् सर्वम् । किन्तु कुतोऽद्य देवस्यापि यात्रा ।

काश्यपः—अहो बत, मया खलु काव्यरसेन प्रसङ्गो विस्मृतः। सम्यक् प्रतिबोधितोऽसि । पुरा दुर्गादेवी प्रोष्ठपदमासे दशम्यां तिथौ महिषासुरमवधीत् । अन्यदा च तादृश्यामेव तिथौ स्कन्दः शूरपद्मासुरसंहारमकरोत् । तदानुसंवत्सरिकोऽयं यात्रोत्सवः देवकुलेषु शिष्टैर्निर्वाह्यते ।

गौतमः—अत एव खलु मन्ये जयैषिणो राजानः दिवसेऽस्मिन् जैत्रयात्रामुपक्रमन्ते ।

काश्यपः—न केवलं शत्रुजयैषिणो राजानः परन्तु सर्वकार्यै-

ष्वपि सिद्धिं प्रार्थयमानाः अद्य आरम्भं कुर्वन्ति । विद्यारम्भस्यापि अयमेव प्रशस्तो दिवसः ।

गौतमः—अहो सुष्ठु बोधितोऽस्मि । एहि तावत् देवं साक्षात्कुर्वः ॥ इति निष्क्रान्तौ ॥

---

## पाठः १९.

॥ श्रीशिवः शरणम् ॥

स्वस्ति । श्रीमत्कैरवक्षेत्रवास्तव्यानां निरवद्यविद्याविनोदमेदुरान्तरङ्गाणां, शब्दालङ्कारतर्कवागीशादिबिरुदवृन्दविभूषितपवित्रनिजनामधेयानां, परिणतप्रज्ञाप्रकाशलालितब्रह्मश्री-विराजमानवपुषां प्रियमातुलमहामान्यानां चरणयोः सहस्रकृत्वः साष्टाङ्गं मनसा प्रणिपत्य प्रेयान् कनिष्ठभागिनेयः शिवशर्मा सप्रणयं सादरं च विज्ञापयति ॥

कुशलमिह सर्वतः शर्वप्रसादेन । तत्रत्यसार्वत्रिककुशलवार्तानिवेदयित्रीं पत्रीं प्रहीयमानामभ्यर्थये ॥

अत्र खल्विदानीं, श्रीमत्याः चम्पकमालिन्याः प्राथमिको दीपावलीमहः निर्भरप्रमोदं निर्वृत्तः । तत्र भवत्या मातुलान्या श्रीमता मुकुन्देन च तत्रभवान् नागतोऽस्य समृद्धिमनुभवितुं इत्येतदेवैकं न्यूनम् । जामातृबान्धवाः बहवः समागता आसन् । चम्पकमालिन्याः कनिष्ठदेवरः मम द्वित्रदिनानि विहारमित्रमासीत् । आवयोर्मध्ये चीनस्फोट-

पटलानां ज्योतिर्वर्तिसमुद्गकानां विविधानां चेतरेषां प्रज्वलनकाण्डानां केन कियत् विस्फोटितं प्रदीपितं चेति न शक्यं परिगणयितुम् । तत्र चात्यभियोगदुर्ललितत्वात् क्वचिदतिलंघितः प्रसङ्गः । यद्यप्यनुशयप्रदं विचेष्टितं तथापि नास्त्यनिवेद्यं तत्रभवतां निकटे । आवां रथ्याप्रसुप्तस्य कस्यचित् गर्दभस्य वाले चीनस्फोटपोट्टलिकां बद्ध्वा प्रादीपयाव । ततो जामातुरभ्यङ्गमङ्गलसमकालमेव तौर्यकमेलकमप्यभिभूय रासभो विचित्रदीर्घं विरवितुं मारभत । अतिजवेन प्राद्रवच्च भीत्या मुहुर्व्युदस्यन् पश्चिमचरणौ । तदनुसारकौतुकेन हृतोऽहं चिरं गेहात् परिभ्रष्ट इति विज्ञातवार्तेन पित्रा तादृशं देशकालमप्यनवेक्ष्याहं सुबहु ताडितः । ताडनवेदनाया अपि मे दुःसहा लज्जा सञ्जाता । यदि वत्सला यूयं अत्र सन्निहिता अवर्तिष्यन्त तदा नूनमीदृशं नान्वभविष्यं प्राघुणिकसमक्षं परिभवम् ॥

अथ विरमत्वेषा कथा । सर्वेषां नः पट्टवस्त्राणि । उज्ज्वलानि च कञ्चुकानि । अनुवेलं समृद्धोऽभ्यवहारः । रसोर्मिला गोष्ठीकथा । एवं प्रतिवर्षं भवतु महोत्सवो वर्जयित्वा खरवृत्तान्तम् ॥

अथ खलु विस्मृतं मया यन्मुख्यतमम् । चेन्नपत्तनादागच्छता आवुत्तेन हंसनामांकितैका अतिमनोहरा मषीनालिका

मह्यं क्रीत्वा पारितोषिकत्वेनोपढौकिता। अनयैवेदानीं लिखामि।

तत्र भवत्यै मातुलान्यै मत्प्रणामाः आवेदनीयाः ॥

अन्यच्च, आगामिमाघमासे भविता यो ममोपनयन-महोत्सवः तस्मिन् मातुलानीमुकुन्दाभ्यां सहोपागतानां तत्र-भवतां समागमसौभाग्यं प्रतीक्षमाणा वर्ते इति शम् ॥

---

पाठः २०.

कच्चित् संस्कृतभाषया व्यवहर्तुं जानासि ?

सुष्ठु न जानामि। किंतु तथा कर्तुं मम प्रीतिर्जायते। उपाध्यायः शिक्षयतु माम्।

तर्हि पाठावलित्रयं त्वां शिक्षयामि। इयमुपक्रम-पाठावलिर्नाम। अतःपरं मध्यमपाठावलिः। परस्ताच्च प्रौढपाठावलिः। आसां पठनावधारणाभ्यां अनवद्या भाषा-व्युत्पत्तिः, चेतश्चमत्कारः, लोकविज्ञानं, व्यवहारपाटवं, नीतिमतिः गुणविवेकश्च भूयसा भवितुमर्हन्ति।

अवश्यं च संस्कृतभाषापरिचयः संपादनीयः यदि श्रीमद्रामायणमादिकाव्यं पठितुमादरः। यदि कालिदासा-दीनां महाकवीनां साहित्यसुधामास्वादयितुमस्ति तृष्णा।

इयं च भाषा देवानां नैसर्गिकी भाषेत्युच्यते।

किञ्च, शिल्प - संगीत - चिकित्सा - ज्योतिषार्थशास्त्र-राजनीति - प्रमुखान् लौकिकविषयानारभ्य ब्रह्मतत्वविचार-

पर्यन्तेषु सकलेषु विद्याविभागेषु पुष्कलपरिपोषेयं गैर्वाणी वाणी ॥

इयं च जननी बह्वीनामिदानीन्तनदेशभाषाणाम् ।

अस्यां हि पूर्वैः चतुर्दश विद्याः परिनिष्ठापिताः । ताः यथा—

अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः ।
पुराणं धर्मशास्त्रं च विद्या ह्येताश्चतुर्दश ॥

एतासां विद्यानां विविच्य स्वरूपाणि पश्चात् भोत्स्यसे ।

या अनधिगतार्थापि श्रोत्रमनोहरा, परिचिता च चतुर्वर्गफलदात्री तस्याः समाकलने श्रद्धा सुकृतिनां भवति । तदधीष्व एकमना भूत्वा संस्कृतभाषाम् ।

धन्योऽस्मि। अनुगृहीतोऽस्मि । आकलितनिश्चयोऽस्मि ॥

---

## पाठः २१.

सखे, किमिदं पुस्तकम् ।
इदं रघुवंशकाव्यम् ।
केन ग्रथितं तत्काव्यम् ।
महाकविना कालिदासेन ।
कः काव्येऽस्मिन् विषयो वर्णितः ।
रघूणामन्वयो वर्णितः ।
के ते रघवः ।

ते किल सूर्यवंशे जाताः राजानः। विश्रुतानि तेषां महामहिम्नां चरितानि। तेषामाद्यो वैवस्वतो मनुः।

कस्य कस्य राज्ञश्चरितं वर्णितम्।

क्रमेण दिलीपरघ्वज-दशरथ-रामचन्द्राणां; ततश्च रामचन्द्रसून्वोस्तदनन्तराणां कतिपयानां राज्ञां च चरितानि।

तेषु च—

गोब्राह्मणेभ्यः शुभमाचचार
राजा दिलीपः ससुदक्षिणाकः।
रघुर्वदान्यो विजयी समीजे
लुप्तार्द्धिना विश्वजिता विवेकी॥

अजस्तु भोज्यामुदुवाह कन्या-
मपास्य राजन्यकमात्तजन्यम्।
भेजेऽथ राजेन्द्रसखस्तनूज-
मजात्मजो राक्षसकक्षदावम्॥

रघोःकुलस्योन्नतिमादधानः
स्वयं हरिर्दाशरथिर्बभूव।
योऽर्थं पराक्कृत्य विसृज्य राज्य-
मातास्थिवान् केवलमेव धर्मम्॥

रामात्मजौ रामकथाप्रवीणौ
कौमार एवादिकवेर्महर्षेः।

अन्तेवसन्तौ मधुरस्वराढ्यौ
रामाश्वमेधे जगतुः प्रबन्धम् ॥
नवीकृतां स्वां कुलराजधानी-
मावासयत् सोऽथ कुशःक्षितीशः ।
यद्धस्तभूषापनयापराध-
मात्मार्पणान्नागवधूर्ममार्ज ॥
अथातिथिर्नाम कुशात्मजोऽभू-
द्यस्मादमोघः प्रससार वंशः ।
आचाग्निवर्णादतिसेवितेन
भोगेन योऽग्रस्यत रोगभावम् ॥

भूयिष्ठमेतेषां चरितामृतमुद्धृतमस्त्यस्मिन्नेव समासतः पाठावलित्रये ।

अहो उदारः सन्दर्भः ।

महामहिमानो रघवो राजानः । महार्घास्तत्र काव्य-गुणाः सर्वे समवेताः । तथाहि—पावनानि पुण्यश्लोकाना-मपदानानि । रमणीयाः कथोद्घाताः । गम्भीरो धर्ममर्मो-पदेशः । अत्युदात्ताः प्रतिबिम्बिता लोकव्यवहाराः । मनोज्ञाः वर्णनाक्रमाः । प्रसन्नः पदसन्दर्भः । रीतिरति-मधुरा । उज्ज्वला उपमाप्रधाना अलंकाराः । पञ्चसु महाकाव्येषु काव्यममुं प्रथमं गणयन्ति सहृदयाः ॥

कान्येतानि पञ्च महाकाव्यानि ।

कालिदासीयं द्वयम् । रघुवंशम् । कुमारसंभवं च । भारवीयं किरातार्जुनीयम् । माघस्य शिशुपालवधम् । श्रीहर्षस्य नैषधीयचरितं च ।

कथं महाकाव्यस्यास्य भावं यथावत् ज्ञातुं शक्यम् ।

अस्य च इतरेषां च महाकाव्यानां मल्लिनाथसूरिणा व्याख्याः कृताः । ता एव काव्यानि पठतां सर्वार्थान् प्रकाशयन्ते ।

तेनहि, अस्ति मे प्रीतिः काव्यानि श्रोतुम् । अद्यप्रभृति ते सहाध्यायी भवामि ।

अभिनन्दनीयस्ते अध्यवसायः ॥

---

## पाठः २२.

सखे, शाकटायन, कुत्र प्रस्थितोऽसि ।

सखे, दाल्भ्य, ग्रामोपशल्ये न्यग्रोधस्थलीमभिप्रस्थितोऽस्मि ।

किं तत्र ।

अद्य खलु ग्राममिमं भल्लूकभिक्षुकः प्राप्तः ।

ततः किम् ।

सः न्यग्रोधस्थल्यां रजनीं विश्राम्यति ।

सर्वेऽपि खलु वैदेशिकास्तत्र रात्रिं शेरते ।

अस्त्येतत् । यतः स तत्र वैदेशिकधर्ममठः वट-मण्डलीमध्ये । नित्यमेवाशून्यः स देशः यात्रिकैर्भिक्षुकैर्वा मार्गानुरोधात् प्राप्तैः ।

तेन ह्यहमपि त्वामनुगच्छामि । आवयोः दिनान्त-रमणीयं तत्र विनोदहेतोः विचित्रसन्दर्शनकं भवतु ।

आगच्छतु प्रिय वयस्यः ।

सखे, शाकटायन, किमिदं अवितथं यज्ञनो वदति "भल्लूको रामनामसंकीर्तनमनवरतं करोति" इति ।

सखे, दाल्भ्य, मतिमतामुत्प्रेक्षा ह्येषा । कुतो नामो-च्चारणं तिरश्चो भल्लूकवराकस्य ।

सखे शाकटायन, जाम्बवतः खल्वन्वयजा इमे भल्लू-काः । क्रमागता चैषां रामभक्तिः ।

तेन हि सर्वेऽपि मर्कटाः हनुमतः सगोत्राः । अहय-श्चादिशेषस्य । कङ्कटिट्टिभचटकवायसादयश्च गरुत्मतः स-पक्षाः । एवं तिर्यक्षु चाहीना वैष्णवपरंपरा । तद्यथा तथा वा भवतु । इमौ प्राप्तौ स्वः वटषण्डम् ।

अहो अन्यूनोऽयं भिक्षुकसंघातः ।

एवम् । अनुत्प्रेक्षिता बहवश्चात्र । पश्य । अयमाहितुण्डिकः परिपतन्तौ पन्नगौ सरभसं विकर्षन् मञ्जूषायां स्थापयति । एष मर्कटभिक्षुकः मर्कटं वृक्षाधिरो-हणचपलं रज्ज्वा अवलम्बते । अत्र ऐन्द्रजालिकः नकुलं

शङ्कां निबध्नाति । अत्र स्तम्भनर्तकः सकुटुम्बो वह्निं प्रज्वल्य भाजने पाकमारभते । इह डमरुकभिक्षुकः उपार्जिताः कन्थाः वितत्य परीक्षते। अयमसौ गायकभिक्षुकः तन्त्रीदण्डं भूमौ न्यस्य नयने निमील्य शेते। अन्यत्र कापालिको योगमध्यास्ते। अपरत्र प्रव्राजकभिक्षुकः जानुबन्धनेन स्थिरासनः सध्यानं तिष्ठति । यत्सत्यमिदानीमावयोः विनोदाय विविधविचित्रं प्रेक्षणकं संवृत्तम् ॥

---

## पाठः २३.

सत्यव्रत, कुतस्त्वं पठनोचिते अवसरे बालकं धारयन् निश्चिन्तस्तिष्ठासि ।

प्रियंवद, एवमेतत् । तत्रभवान् मे पिता दर्शनागतेन केनचित् वैदेशिकेन विपश्चिता संभाषणं कुर्वन्नास्ते। माता च पाककर्मणि व्यग्रा बालकं प्रत्यवेक्षितुं न शक्नोति । अयं च दुर्ललितः क्षणमप्यनवेक्षितः किं किमत्याहितं नानुतिष्ठति । द्रव्याण्यवकिरति । चुल्लीपरिसरं प्रधावति । सलिलशरावमावर्जयति । भाण्डानि भिनत्ति। मृदं भक्षयति। मातुः संव्यानमाकर्षति । अनिशं रोदिति । विष्वग्विचरति । पितुरङ्कमारोहति । आच्छिनत्ति च लेखिनीपुस्तकादिकम् ।

किमस्य वयः ।

ऊनत्रिहायनः ।

अयमेव बालभावः । श्रीकृष्णस्य च बालभावः मधुरं वर्णितः कविभिः । सोऽपि किल नवनीतमचोरयत् परकीयेषु

गेहेषु । भाण्डान्यभिनत् । उद्धतमधावीत् । मृषा बभाषे। असकृदाविष्कृत्य परत्वं व्यामोहयच्च मातरम् । अत्र खलु प्रथन्ते श्लोका लीलाशुकस्य ।

तत्खलु सुपेशलं कवित्वं जगतः कर्णामृतम् । महन्मे कुतूहलम् । वर्णयतु वयस्यस्तत्र यत्कण्ठगतम् ॥

सत्यव्रत, पाठितोऽहं सुभाषितसन्दोहं अतिबाल एव-मन्मातामहेन । यः किल भुवनविदितः साहित्यपीयूषवर्षी जीमूतः । तेन हि पश्चषानवसरप्राप्तान् इमान् शृणु—

अवहितोऽस्मि ।

डोलायां शेते केशवः । माता च यशोदा तस्य निद्राहेतोः कथां कथयति ।

रामो नाम बभूव । हुम् । तदबला सीतेति । हुम् । तां पितुर्वाचा पश्चवटीवने निवसतस्तस्याहरद्रावणः ।

कृष्णेनेति पुरातनीं निजकथामकार्ण्य मात्रेरितां
सौमित्रे क्व धनुर्धनुर्धनुरिति प्रोक्ता गिरः पान्तु वः ॥

अहो कृष्णावतारे रावणवधव्यग्रता । ततस्ततः ।

अयमपरः प्रस्तावः । बलभद्रः पिशुनीभूय मातरं ब्रूते ।

कृष्णेनाम्ब गतेन रन्तुमधुना मृद्भक्षिता स्वेच्छया । सत्यं कृष्ण । क एवमाह । मुसली । मिथ्याम्ब पश्या-ननम् ।

व्यादेहीति विकासितेऽथ वदने माता समस्तं जगद्दृष्ट्वा यस्य जगाम विस्मयपदं पायात्स वः केशवः ॥

एवं हि जगत्कुक्षिंभरिं बालकं मृत्कणभक्षणे जातागसं मन्यते स्म वल्लवी ॥ ततस्ततः ॥

क्वचिन्मुग्धो बाल एव स कपटनाटकसूत्रधारः । पश्य ।

कालिन्दी पुलिनोदरेषु मुसली यावद्गतः क्रीडितुं
तावत्कर्बुरिकापयः पिब हरे वर्धिष्यते ते शिखा ।
इत्थं बालतया प्रतारणपराः श्रुत्वा यशोदागिरः
पायाद्वः स्वशिखां स्पृशन् प्रमुदितः क्षीरेऽर्धपीते हरिः ॥

अहो मौग्ध्याभिनयस्य माधुर्यम् ॥ ततस्ततः ॥

अन्यच्चेदम् ।

मातः । किं यदुनाथ । देहि चषकम् । किं तेन । पातुं पयः । तन्नास्त्यद्य । कदास्ति वा । निशि । निशा का वा । अन्धकारोदये ।

आमील्याक्षियुगं निशाऽप्युपगता देहीति मातुर्मुहुर्वक्षोजांशुककर्षणोद्यतकरः कृष्णः स पुष्णातु नः ॥

अहो हास्यकन्दं संविधानकम् ।

अथ च नन्दकुमारस्य चौर्येऽपि वैयात्यम् । क्वचिल्लक्षितसाहसः स गोपिकयाऽनुयुज्यते ।

कस्त्वं बाल । बलानुजः । किमिह ते । मन्मान्दिराशङ्कया । युक्तं तन्नवनीतपात्रविवरे हस्तं किमर्थं न्यसेः ।

मातः । कश्चन वत्सकं मृगयितुं मागा विषादं क्षणा-दित्येवं वरवल्लवीप्रतिवचः कृष्णस्य पुष्णातु नः ॥

अयमसौ शठो वेदितव्यः । किं पिता मामाह्वयति । गच्छतु प्रियसखः पुनर्दर्शनाय ॥

---

## पाठः २४

उपाध्याय, हारीतगोत्रोद्भवः हरदत्तनामा अहं अभि-वादये ।

भद्र, चिरं जीव । कुत आगच्छसि ।

अस्ति कावेरीतीरे भास्करपुरमित्यग्रहारः । तस्मादा-गच्छामि ।

कच्चित्ते पितरौ तत्रैव वसतः ।

अथ किम् ।

किमागमनप्रयोजनम् ।

भवत्सकाशात् शास्त्राण्यध्येतुं उत्सुकः आगतोऽस्मि ।

कच्चित् कव्यालंकारादिषु संपादिता व्युत्पत्तिः ।

अस्ति । रघुवंश-माघ-नैषधादीनां काव्यानां, शाकुन्तल-जानकीपरिणयानर्घराघवादीनां नाटकानां, रामायण-भारत-नीलकण्ठविजय-विश्वगुणादर्शादीनां चम्पू प्रबन्धानां च पठ-नादनन्तरं कुवलयानन्द - काव्यप्रकाश - ध्वन्यालोकादीन-लंकारग्रन्थान् अधीतवानस्मि । अधुना तर्कशास्त्रे प्रवेशः कर्तव्यः ।

कस्माद्गृहीता समग्रेयं साहित्यविद्या ।

मत्पितुरेव ।

कथं तत्रभवान् ते पितैव शास्त्रेऽपि न त्वां शिक्षयति ।

स खलु बहुकन्यापितृत्वादर्थकार्श्यमनुभवन् वृत्तिहेतोः असकृदाढ्यग्रामान् पर्यटति ।

कीदृशी वृत्तिराढ्यग्रामेषु तेनोपलभ्यते ।

कुत्रचिद्वर्षाशनानि । अन्यत्र वैदुष्यपारितोषिकानि । परत्र पुराणप्रवचनादिद्वारा प्रीतिदायांश्चोपार्जयति ।

उपपद्यते । बाढं मे शिष्यो भवसि ।

गुरो अनुगृहीतोऽस्मि । कच्चिदिदानीमत्र तर्कपाठः प्रचलति । कियन्तो वा पठन्ति ।

प्रातर्वेदान्तपाठः । उपनिषद्भाष्यमुपदश अन्तेवासिनः अधीयते । अपराह्णे तर्कव्याकरणादयः प्रोच्यन्ते ।

कतिच्छात्रास्तर्कगोष्ठ्याम् ।

इदानीं पञ्चषा एव । तर्कसङ्ग्रहस्तेषां प्रायेण परिसमाप्तः । नीलकण्ठप्रकाशिका चोपक्रमयिष्यते । तदचिरात् त्वमपि तेषां गोष्ठीं प्रवेक्ष्यसि ।

कदा नु स्यान्नूतनपाठोपक्रमः ।

आगामिशुक्लद्वितीयायाम् ।

अप्यस्मिन् दिने अध्ययनं भविष्यति ।

अद्य खलु चतुर्दशीत्यनध्ययनम्। कथं न वेत्थ। भवतु नाम। कुत्र केन वा त्वं निवत्स्यसि।

आचार्यगृह एव निवस्तव्यं मया। भिक्षावृत्तिना च भवितव्यम्।

युज्यते। स खलु विद्यार्थिनां नियमो धर्मसूत्रकारैः पठितः।

अथ कियत्ते वयः।

अस्यां खलु श्रावणकृष्णाष्टम्यां चतुर्दश मे वत्सराः परिपूर्णा भविष्यन्ति।

कच्चिद्वेदमधीतवानसि।

सामशाखाध्यायी खल्वहं साङ्गं वेदं मन्मातुलात् शङ्करस्वामिनः अध्यगीषम्।

परं नः प्रियम्। प्रशस्तोऽसि त्वमधिकारी शास्त्रमार्गे विचरितुम्। उपपन्ने च काले सर्वविद्याविशारदो भूयाः॥

---

## पाठः २५.

गालव, श्वेतकेतो, विश्वरूप, धौतेषु गुरुचरणानां वस्त्रेषु, विकटावकाशे च सन्ध्यापरिनिपाते, समस्यापूर्त्यन्तादिप्रमुखैर्विनोदैः कुतो न मुहूर्तं विस्रब्धं तिष्ठामः।

प्रथमः कल्पः ।

सखे काश्यप, सोऽप्ययमस्मन्नूतनसब्रह्मचारी हरदत्तः समागच्छतु ।

एषोऽयमागत एव । तस्य पश्चाद्वैशंपायनोऽपि ।

सुहृदः, किमर्थं वो मत्प्रतिपालनम् ।

अन्तादिगोष्ठीं निबध्नीम इति ।

प्रियं मे ।

तेन ह्यस्मिन् सरस्तीरमठालिन्दे समासीना भवामः । केनोपक्रमिष्यते ।

ननु भवानेवास्माकमग्रिमः ।

उदारः प्रणयः । तर्हीदमवधार्यम् । यस्य त्रिर्न स्फुरति स निर्गत्य विश्राम्यति । अन्तिमवर्णेन हला यद्युपक्रमो न घटते तदा अचैव साध्यते । पद्यैः प्रायेण प्रकरणाद्बहिः सञ्चारयोग्यैः सुभाषितैर्भवितव्यम् । हलोपक्रमे यावच्छक्यं तदुपश्लेषिणः अचोऽपि सारूप्यमनुपालनीयम् ।

अहो बत, निशिततमा नियमाः ।

प्रवीणानां परिषदिति उत्तमपक्षः प्रस्तूयते ।

एवमपि भवतु पश्यामः ॥

तथाहि—

आनन्दमन्थरपुरन्दरमुक्तमाल्यं
मौलौ हठेन निहितं महिषासुरस्य ।
पादाम्बुजं भवतु नो विजयाय मञ्जु-
मञ्जीरशिञ्जितमनोहरमम्बिकायाः ॥१॥

याचमानजनमानसवृत्तेः पूरणाय बत जन्म न यस्य ।
तेन भूमिरतिभारवतीयं न द्रुमैर्न गिरिभिर्न समुद्रैः ॥२॥

ऐश्वर्यस्य विभूषणं सुजनता शौर्यस्य वाक्संयमो
ज्ञानस्योपशमः श्रुतस्य विनयो वित्तस्य पात्रे व्ययः ।
अक्रोधस्तपसः क्षमा प्रभवितुर्धर्मस्य निर्व्याजता
सर्वेषामपि सर्वकारणमिदं शीलं परं भूषणम् ॥३॥

अम्भोजिनीवनविहारविलासमेव
हंसस्य हन्ति नितरां कुपितो विधाता ।
न त्वस्य दुग्धजलभेदविधौ प्रसिद्धां
वैदग्ध्यकीर्तिमपहर्तुमसौ समर्थः ॥४॥

अर्थं सप्रतिबन्धं प्रभुरधिगन्तुं सहायवानेव ।
दृश्यं तमसि न पश्यति दीपेन विना सचक्षुरपि ॥५॥

पिबन्ति नद्यः स्वयमेव नाम्भः
स्वयं न खादन्ति फलानि वृक्षाः ।
अदन्ति सस्यं न च वारिवाहाः
परोपकाराय सतां विभूतिः ॥६॥

तिमिरमिव वहन्ति मार्गनद्यः
पुलिननिभाः प्रतिभान्ति हर्म्यमालाः ।
तमसि दश दिशो निमग्नरूपाः
प्लवतरणीय इवायमन्धकारः ॥७॥

रजनीमवाप्य रुचमाप शशी
सपदि व्यभूषयदसावपि ताम् ।
अविलम्बितक्रममहो महता-
मितरेतरोपकृतिमच्चरितम् ॥८॥

तपस्यन्तः सन्तः किमधिनिवसामः सुरनदीं
गुणोदारान् दारानुत परिचरामो गृहगताः ।
पिबामः शास्त्रौघानुत विविधकाव्यामृतरसान्
न विद्मः किं कुर्मः कतिपयनिमेषायुषि जने ॥९॥

नेता यत्र बृहस्पतिः प्रहरणं वज्रं सुराः सैनिकाः
स्वर्गो दुर्गमनुग्रहः खलु हरेरैरावणो वाहनम् ।
इत्याश्चर्यबलान्वितोऽपि बलभिद्भग्नोऽसुरैः संगरे
तद्युक्तं ननु दैवमेव शरणं धिग्धिग्वृथा पौरुषम् ॥१०॥

षड्दर्शिनीपरिज्ञानमण्डितैरिव पण्डितैः ।
स्तम्भैश्चित्रैर्वितानैश्च सभा किमवभासते ॥११॥

ते वन्द्यास्ते महात्मानस्तेषां लोके स्थिरं यशः ।
यैर्निबद्धानि काव्यानि ये वा काव्येषु कीर्तिताः ॥१२॥

---

## पाठः २६.

वयं भारताख्ये देशे निवसामः । इयं नो जन्मभूमिः। अस्याश्चतुराघाटान् कच्चिज्जानीषे । उत्तरस्यां दिशि हिमवान्। इतरासु तिसृषु दिक्षु समुद्रः । भूमिरियं पावनतमेति प्रोच्यते। अस्यां गङ्गा-सिन्धु-गोदा-तुङ्गभद्रा-कावेरी-ताम्रपर्ण्यादयः पुण्य-नद्यः प्रवहन्ति । काले काले चास्यां कृतावताराः महान्तः ऋषयः भारतीयानामस्माकं लौकिकालौकिकश्रेयःसाधनानि बोधयामासुः । देशेऽस्मिन् हिमवद्विन्ध्ययोर्मध्ये वर्तमानो भागः आर्यावर्त इत्युच्यते । विन्ध्यमलययोरन्तरा दक्षिण देशः । वयं दक्षिणदेशवासिनः दाक्षिणात्याः ।

अस्मिन् देशे बहवः जनपदाः सन्ति । एकैकस्मिञ्जनपदे बहवो ग्रामाः नगराणि च वर्तन्ते । नगरजनः पौरो नागरिक इति निर्दिश्यते । ग्रामवासिनः ग्रामीणाः निगद्यन्ते ॥

(२)

किं ते प्रेयः । ग्रामीणत्वं नागरिकत्वं वा । ग्रामीण-नागरिकयोः महदन्तरं भवति । ग्रामीणः प्रायेण मुग्धः । नागरिकश्चतुरः । कदाचिद्धूर्तोऽपि । नगरगतो ग्रामीणः नागरिकधूर्तैर्वञ्च्यते । वेषभाषादिभिः नागरिको विशिष्टः । वेषाडम्बरेण मुग्धः ग्रामीणः नागरिकं पूजयति । स्वल्पपरिच्छदं ग्रामीणं नागरिकः अवमन्यते । प्रायो वेषरचनया मुग्धो हि लोकः । उक्तं च—

"वस्त्रेण वपुषा वाचा विद्यया विनयेन च ।
वकारैः पञ्चभिर्हीना नरा नायान्ति गौरवम् ॥"

स्थाने चात्र प्रथमं "वस्त्रेण नरो गौरवं याति" इति परिगणितम् । याथार्थ्यं तूक्तं दीक्षितचरणैः ।

"अक्षराणि परीक्ष्यन्तामम्बराडम्बरैरलम् ।
शम्भुरम्बरहीनोऽपि सर्वज्ञः किं न पूज्यते ॥" इति ।

(३)

पुरा विद्वांसः प्रायेण ग्राम एव न्यवसन् । ते नगरवासे रुचिं नाबध्नन् । नगरवासे आचारानुष्ठानादीनां सौकर्यं नास्ति । जनसम्बाधवत्वात् नगराणि अर्थार्जनपराणामेव वासस्य योग्यानि । न तु श्रद्धालूनां निवृत्ततर्षाणां साधूनाम् । साधवः तीर्थोदकानि देवकुलानि च ग्रामेषु पश्यन्तः तत्रैव वासमरोचयन्त । इदानीमांग्लविद्याप्राबल्यात् जनेषु नगरवासोन्मुखेषु प्रायो जातेषु, मुषितशोभाः शोचनीयावस्थाः ग्रामाः नितरां मनो दावयन्ति । ते तु इतः शतसंवत्सरेभ्यः प्राक्तने काले अन्यूनवैभवा व्यद्योतन्त । तथाहि साहित्यरत्नाकरे चोलदेशवर्णने इत्थं वाचोयुक्तिः—

प्रत्यग्रहारं प्रतिगोष्ठमेव विप्रैस्त्रिवेदीविधिवावदूकैः ।
गोभिश्च तृण्याकबलांसलाभिर्महीयते यत्र मनुर्हविश्च ॥

(४)

अस्मद्ग्रामः कावेरीतीरे वर्तते। स परितो विस्तीर्णानां पूगनारिकेलकदलीतरुषण्डानां उत्सङ्गगत इव लक्ष्यते। क्षेत्रारामनिरन्तरतया शीतलश्यामलं संपन्नावश्यकभोगौपयिकं च ग्राममधिवसन्तः जनाः अलुब्धाः अनामयाश्च सुखिनो भवन्ति। ग्रामवासिनां सह्यसुता मातेव पोषयित्री उपान्तिक एव प्रवहति। सा सर्वतः कुल्यापल्वलकूपदीर्घिकादीन् निर्भरैः सलिलैरापूरयति। एभिः सलिलैः फलपुष्पसमृद्धिः सस्यवृद्धिश्च जायते। तेन सुभिक्षं भवति।

जलपूर्णेषु तटाकेषु सायंप्रातः कुमुदानि सरोजानि च विकसन्ति। तेष्वण्डजा मुदा कूजन्तो डयन्ते। तत्तीरेषु शाद्वलवतीषु गाश्चारयन्तो गोपाः वेणून् वादयन्तः तरुस्कन्धेषु नृत्यन्ति। अगोचरे कुत्रचित्तरुशाखायां निलीनः कोकिलः असकृत् पञ्चमस्वरेण श्रोत्रमनोहरं गायति। फलशाखिनः पुष्पवाट्यश्च परितः शोभन्ते। नदीतीरे धर्ममठो दृश्यते। अन्तिकाद्गणपतेरगारो भवति। नद्यां स्नात्वा मठे विप्रा जपं कुर्वन्ति। कदाचिद्यदृच्छया आगताः यतीन्द्राः गृहस्थैरुपास्यमानाः तस्मिन् मठे वासमङ्गीकुर्वन्ति। अहो ग्रामस्य सौभाग्यम्॥

(५)

चोलमण्डले बहवो ग्रामाः विद्वद्ब्राह्मणानां पूर्वैः राजभिः दानशासनद्वारा वितीर्णा आसन्। प्रायस्तेषां

ग्रामाणामयं सन्निवेशः । ग्रामस्य मध्ये अग्रहारः । यत्र ब्राह्मणाः प्रतिवसन्ति स्म । ये षट्कर्मनिरताः, षडङ्गपारगाः, यायजूकाः अध्यापकाः, कवयः, व्याख्या-व्यास-समासादि-कर्तारः पुराणेतिहासप्रवचनप्रवीणाः । तस्य च प्रान्तयोर्हरिहरयोरालयौ प्रतिष्ठितावास्ताम् ।।

अग्रहारं परितः ग्रामाभिजनानां कर्मकराणां वैश्यशूद्र-वर्णजातानां निवासस्थानान्यभवन् । ते च कर्मकराः तक्षक-कुविन्द-कुंभकार-रजक-कर्षक-लोहकार-नाडिन्धम-नापित-गोपा-लक-नट-नर्तक-चित्रकार-वेश्मकार-चक्रोपजीवि-वणिङ्मुख्याः बहूनामेतेषां स्वेच्छाभोग्याः सीमान्ताः प्रत्येकं वरिवस्या-मूल्यतया आग्रामाधवेशनं समुदायसमयेनोपकल्पिता आसन् ।

ग्रामे केचन अधिकारिणः गणकयामिकरक्षिप्रभृतयः । विवादनिर्धारणार्थं प्रायेण नीतिनिष्णाताः महत्तराः द्विजाः सभ्या अभवन् ।

पूर्वं ग्रामेष्वर्भकाणां विद्याप्रवेशदेशिकाः स्वगृहालिन्दानेव शिक्षायतनान्यकल्पयन् वेदाध्यापकानां कदाचित् देवकुलमण्डपा मठायतनानि च विद्यामन्दिरतामभजन्त ।

---

## (६) ।। केदारचर्या ।।

इयं सायन्तनी सन्ध्या शम्भो रम्या प्रवर्तते ।
एहि पर्यटनं कुर्वः किञ्चित्केदारभूमिषु ।।१।।

गेहे तिष्ठति या ते गौः सापि त्वामनुवर्तताम् ।
क्षेत्रसीमातटीरूढं शाद्वलं सा चरिष्यति ॥२॥

दुग्धेन पोषयन्त्यस्मान् दैवतं परमं हि गौः ।
प्रणयात्प्रत्यवेक्षस्व तां संवेशाशनादिषु ॥३॥

हरितान् पश्य केदारानुदारानिलवीजितान् ।
अर्धोद्गीर्णलसच्छालिकणिशान् सस्मितानिव ॥४॥

व्रीहीन् यवांश्च गोधूमानन्नार्हान् भुञ्जते नराः ।
तत्र तु व्रीहयोऽस्माकमन्नत्वेऽभ्यर्हिताः परम् ॥५॥

माषमुद्गतिलादीनां पश्य क्षेत्राणि दूरतः ।
फलन्ति यानि सिक्तानि वर्षैर्वापीजलैरपि ॥६॥

इतस्ततश्च संपश्यञ्शम्भो त्वमवधानतः ।
गृहीतं विमृशन् बुद्ध्या भद्रं ज्ञानमवाप्स्यसि ॥७॥

अवसन्ननियोगोऽयं पश्य शम्भो दिवाकरः ।
वृक्षषण्डान्तरालक्ष्यः प्रतीच्यां विनिमज्जति ॥८॥

स हि सन्ध्याभ्रसङ्घट्टे रोचमानोऽरुणद्युतिः ।
शनैस्तमसि सारम्भे संहरत्यात्मनः करान् ॥९॥

अस्यां प्रदोषवेलायां सन्ध्याकर्म सरित्तटे ।
कृत्वा देवकुलं यावः शम्भो शम्भुमुपासितुम् ॥१०॥

शिष्टैर्भानुकरैर्दीप्ता क्वचित्कनकभास्वरैः ।
दृश्यडुण्डुभसञ्चारा समीनपरिवर्तना ॥११॥

कुर्वती मर्मरान् मन्दं भ्राम्यन्त्यावर्तमण्डलैः ।
वहत्येषा हि तटिनी तटरूढकुशांकुरा ॥१२॥

इति शम्भुचर्योपदेशे केदारचर्या ॥

---

## (७) ॥ प्राचां दिनचर्या ॥

ब्राह्मे मुहूर्ते नियतं प्राबुध्यन्ताप्रमादतः ।
ततश्चराचरगुरुं सस्मरुः परदैवतम् ॥१॥
पावनानि च नामानि नलादीनामुदैरयन् ।
प्रातः स्मरणयोग्यानि पेठुः पद्यानि कानिचित् ॥२॥
शुचिवस्त्रयुगोपेतां श्वेतकम्बलसञ्चिकाम् ।
आदाय शिष्यानुगताः सरसीं स्नातुमभ्यगुः ॥३॥
प्रक्षाल्य पाणिपादं च कृत्वाऽथो दन्तधावनम् ।
स्मरन्तः पुण्यतीर्थानि सस्नुः सरसि संयताः ॥४॥
धृत्वा शुचि ततो वासः शास्त्रतश्च त्रिपुण्ड्रकम् ।
अक्षमालां विधायांसे दत्वाऽर्घ्यं महसां निधेः ॥५॥
जेपुर्भगवतीं भक्त्या गायत्रीमघशोधिनीम् ।
नमस्यां सामभिः कृत्वा सर्वलोकैकसाक्षिणे ॥६॥
मन्त्रपूतपयःपूर्णपात्रभूषितपाणयः
स्तुतिगाथोल्लसद्वक्त्राः समाजग्मुर्निजालयम् ॥७॥
उपासांचक्रिरे श्रद्धासमिद्धं जातवेदसम् ।
कुशचीरासनासीना जेपुः पञ्चाक्षरीं ततः ॥८॥

अथैकान्ते निदध्युस्ते सत्वशुद्धेन चेतसा ।
वटद्रुमतलासीनं वर्षिष्ठमुनिसेवितम् ॥९॥
मन्दस्मितोदारमुखमिन्दुसुन्दरशेखरम् ।
कर्पूरपूरधवलं कल्याणगुणशेवधिम् ॥१०॥
करे कलितचिन्मुद्रमात्मानन्दैकनिर्भरम् ।
कथञ्चिद्व्युत्थितास्तस्मात् पश्यन्तो बहिरर्थकान् ॥११॥
ब्रह्मयज्ञं व्यधुः पश्चाज्जगुः सामानि कानिचित्
ततः श्रीरुद्रपुरुषसूक्तादीनां यथाक्रमम् ।
पारायणममी चक्रुरर्थानुसरणोत्तरम् ॥१२॥
अथ यामे प्रयातेऽह्नः प्रश्रितान् समुपस्थितान् ।
शिष्यानध्यापयामासुर्विद्यामध्यात्मसंज्ञिताम् ॥१३॥
अथ होराद्वयादूर्ध्वं कृत्वा माध्याह्निकीं क्रियाम् ।
संभृताखिलसंभारं पूजागृहमुपागमन् ॥१४॥
हरमभ्यर्च्य विधिवद्वैश्वदेवं विधाय च ।
अतिथीनात्मना सार्धं भोजयमासुरादरात् ॥१५॥
तर्कव्याकृतिमीमांसालङ्कारपठनागतान् ।
अपराह्णे ततः शिष्यानासायं समशिक्षयन् ॥१६॥
पाठावसानसमये दर्शनायागताञ्जनान् ।
आहूय परिपृच्छन्तः कथाश्चक्रुर्मनोहराः ॥१७॥
अपृच्छन् विविधान् प्रश्नान् केचित् संशयविह्वलाः ।
धर्माचारादिसंबद्धान् शास्त्रन्यायाश्रितानपि ॥१८॥

सप्रमाणमुदाहृत्य तेषामुत्तरमुत्तमम् ।
अस्ताचलशिरोरत्नशोभां बिभ्रति भास्करे ॥१९॥

धृतरुद्राक्षवलया भस्मोद्धूलनभास्वराः ।
कीर्तयन्तः शिवस्तोत्राण्युपजग्मुः सरोवरम् ॥२०॥

तत्र सायन्तनीं सन्ध्यां निर्वर्त्यायियुरन्तिकात् ।
देवमन्दिरमस्मिंश्च नमस्कृत्य महेश्वरम् ॥२१॥

आगत्य च पुनर्गेहमौपासनमतानिषुः
ततः पञ्चाक्षरीशंभुनामावलिमुखान्यमी ।

मन्त्राण्याम्रेडयामासुरपि दुर्गाकलास्तुतिम् ॥२२॥
वैश्वदेवं ततः कृत्वा भुक्त्वा च समशेरत ।
स्तुवन्तः शयनारम्भे साम्ना देवीमुषाह्वयाम् ॥२३॥

इत्थं प्रत्यहमव्यलीकहृदयाः कालेषु तत्तत्क्रिया-
स्तन्वन्तस्तरुणेन्दुचूडकरुणासंपत्तये केवलम् ।
साकारा इव सद्गुणाः कृतयुगव्यापारदूरीभव-
त्कालेयाकुलकेलयो विदधिरे चेतःप्रमोदं सताम् ॥२४॥

इति श्रीत्यागराजविजये तृतीयोल्लासात् संक्षिप्य
संगृहीता प्राचां दिनचर्या ॥

---

## (८) ॥ अहिंसाचर्या ॥

आ कीटादा च मनुजादा तृणादा वनस्पतेः ।
चराचरात्मकं सर्वं शम्भो जीवात्मकं जगत् ॥१॥

तस्मादहिंसां परमं धर्ममाहुर्मनीषिणः ।
न हिंस्याद्भूतसामान्यं सर्वं तद्येन जीवति ॥२॥

केचिद्रोगजवन्मर्त्याः कन्दमूलफलाशनाः ।
केचिन्मांसाशनाः कङ्कवृकव्याघ्रमृगेन्द्रवत् ॥३॥

प्राणिहिंसोद्भवैरन्नैः कामक्रोधपरा नराः ।
अन्नानुरूपा सत्त्वानां जायते प्रकृतिर्यतः ॥४॥

मांसान्नं तामसं दुष्टं वर्जयन्तः फलाशिनः ।
ये सन्तस्तेभ्य एवास्य लोकस्य क्षेममिष्यते ॥५॥

अहिंसापरिनिष्पन्नमन्नमेव प्रशस्यते ।
तद्भुजामेव सिद्ध्यन्ति गुणाः शमदमादयः ॥६॥

ते नाम भुवि देवाः स्युर्मर्त्या अपि मनीषिणः ।
ये वर्तयेरन्नान्नेन जीवहिंसनहेतुना ॥७॥

सर्वभूतेषु कारुण्यं कुरुत्वमपकल्मषः ।
प्रार्थयस्व जगत्क्षेमं शम्भो भद्राण्यवाप्स्यसि ॥८॥

इति शम्भुचर्योपदेशे अहिंसाचर्या ॥

---

## पाठः २७.

### ॥ यज्ञसंरक्षणम् ॥

अथ तौ देशकालज्ञौ राजपुत्रावरिन्दमौ ।
देशे काले च वाक्यज्ञावब्रूतां कौशिकं वचः ॥१॥

भगवन् श्रोतुमिच्छावो यस्मिन् काले निशाचरौ ।
संरक्षणीयौ तौ ब्रह्मन् नातिवर्तेत तत्क्षणम् ॥२॥

एवं ब्रुवाणौ काकुत्स्थौ त्वरमाणौ युयुत्सया ।
सर्वे ते मुनयः प्रीताः प्रशशंसुर्नृपात्मजौ ॥३॥

अद्यप्रभृति षड्रात्रं रक्षतं राघवौ युवाम् ।
दीक्षां गतो ह्येष मुनिर्मौनित्वं च गमिष्यति ॥४॥

तौ तु तद्वचनं श्रुत्वा राजपुत्रौ यशस्विनौ ।
अनिद्रौ षडहोरात्रं तपोवनमरक्षताम् ॥५॥

उपासांचक्रतुर्वीरौ यत्तौ परमधन्विनौ ।
ररक्षतुर्मुनिवरं विश्वामित्रमरिन्दमौ ॥६॥

अथ काले गते तस्मिन् षष्ठेऽहनि समागते ।
सौमित्रिमब्रवीद्रामो यत्तो भव समाहितः ॥७॥

रामस्यैवं ब्रुवाणस्य त्वरितस्य युयुत्सया ।
प्रजज्वाल ततो वेदिस्सोपाध्यायपुरोहिता ॥८॥

सदर्भचमसस्रुक्का ससमित्कुसुमोच्चया ।
विश्वामित्रेण सहिता वेदिर्जज्वाल सर्त्विजा॥९॥

मन्त्रवच्च यथा न्यायं यज्ञोऽसौ संप्रवर्तते ।
आकाशे च महाञ्च्छब्दः प्रादुरासीद्भयानकः ॥१०॥

आवार्य गगनं मेघो यथा प्रावृषि निर्गतः
तथा मायां विकुर्वाणौ राक्षसावभ्यधावताम् ॥११॥

मारीचश्च सुबाहुश्च तयोरनुचराश्च ये ।
आगम्य भीमसंकाशा रुधिरौघमवासृजन् ॥१२॥

सा तेन रुधिरौघेण वेदिर्जज्वाल मण्डिता ।
दृष्ट्वा वेदिं तथाभूतां सानुजः क्रोधसंयुतः ॥१३॥

सहसाभिद्रुतो रामस्तानपश्यत्ततो दिवि ।
तावापतन्तौ सहसा दृष्ट्वा राजीवलोचनः ॥१४॥

लक्ष्मणं त्वभिसंप्रेक्ष्य रामो वचनमब्रवीत् ।
पश्य लक्ष्मण दुर्वृत्तान् राक्षसान् पिशिताशनान् ॥१५॥

मानवास्त्रसमाधूताननिलेन यथा घनान् ।
मानवं परमोदारमस्त्रं परमभास्वरम् ॥१६॥

चिक्षेप परमक्रुद्धो मारीचोरसि राघवः ।
स तेन परमास्त्रेण मानवेन समाहितः ॥१७॥
संपूर्णं योजनशतं क्षिप्तस्सागरसंप्लवे ।
विचेतनं विघूर्णन्तं शीतेषुबलपीडितम् ॥१८॥
निरस्तं वीक्ष्य मारीचं रामो लक्ष्मणमब्रवीत् ।
पश्य लक्ष्मण शीतेषुं मानवं धर्मसंहितम् ॥१९॥

मोहयित्वा नयत्येनं न च प्राणैर्वियुज्यते ।
इमानपि हनिष्यामि निर्घृणान् दुष्टचारिणः ॥२०॥
राक्षसान् पापकर्मस्थान् यज्ञघ्नान् पिशिताशनान् ।
इत्युक्त्वा लक्ष्मणं चाशु लाघवं दर्शयन्निव ॥२१॥
संगृह्यास्त्रं ततो रामो दिव्यमाग्नेयमुत्तमम् ।
सुबाहूरसि चिक्षेप स विद्धः प्रापतद्भुवि ॥२२॥
शेषान् वायव्यमादाय निजघान महायशाः ।
राघवः परमोदारो मुनीनां मुदमावहन् ॥२३॥
स हत्वा राक्षसान् सर्वान् यज्ञघ्नान् रघुनन्दनः ।
ऋषिभिः पूजितस्तत्र यथेन्द्रो विजयी पुरा ॥२४॥
अथ यज्ञे समाप्ते तु विश्वामित्रो महामुनिः ।
निरीतिका दिशो दृष्ट्वा काकुत्स्थमिदमब्रवीत् ॥२५॥
कृतार्थोऽस्मि महाबाहो कृतं गुरुवचस्त्वया ।
सिद्धाश्रममिदं सत्यं कृतं राम महायशः ॥२६॥

---

## पाठः २८.

### ॥ देवतानमस्कारः ॥

गलद्दानगण्डं मिलद्भृङ्गषण्डं
चलच्चारुशुण्डं जगत्त्राणशौण्डम् ।
कनद्दन्तकाण्डं विपद्भङ्गचण्डं
शिवप्रेमपिण्डं भजे वक्रतुण्डम् ॥१॥

मयूराधिरूढं महावाक्यगूढं
मनोहारिदेहं महच्चित्तगेहम् ।
महीदेवदेवं महादेवभावं
महादेवबालं भजे लोकपालम् ॥२॥

भवान्यै भवायापि मात्रे च पित्रे
मृडान्यै मृडायाप्यघघ्न्यै मखघ्ने ।
शिवाङ्ग्यै शिवाङ्गाय कुर्मः शिवायै
शिवायाम्बिकायै नमस्त्र्यम्बकाय ॥३॥

माणिक्यवीणामुपलालयन्तीं
मदालसां मञ्जुलवाग्विलासाम् ।
माहेन्द्रनीलद्युतिकोमलाङ्गीं
मातङ्गकन्यां सततं स्मरामि ॥४॥

नमोऽस्तु नालीकनिभाननायै
नमोऽस्तु दुग्धोदधिजन्मभूम्यै ।
नमोऽस्तु सोमामृतसोदरायै
नमोऽस्तु नारायणवल्लभायै ॥५॥

नमो नमः कारणकारणाय
नारायणायामितविक्रमाय ।
श्रीशार्ङ्गचक्रासिगदाधराय
नमो नमस्ते पुरुषोत्तमाय ॥६॥

करारविन्देन पदारविन्दं
मुखारविन्दे विनिवेशयन्तम् ।
अश्वत्थपत्रस्य पुटे शयानं
बालं मुकुन्दं सततं स्मरामि ॥७॥

मन्दारमूले मदनाभिरामं
बिम्बाधरापूरितवेणुनादम् ।
गोगोपगोपीजनमध्यसंस्थं
गोपं भजे गोकुलपूर्णचन्द्रम् ॥८॥

श्रीराघवं दशरथात्मजमप्रमेयं
सीतापतिं रघुकुलान्वयरत्नदीपम् ।
आजानुबाहुमरविन्ददलायताक्षं
रामं निशाचरविनाशकरं नमामि ॥९॥

नमोऽस्तु रामाय सलक्ष्मणाय
देव्यै च तस्यै जनकात्मजायै ।
नमोऽस्तु रुद्रेन्द्रयमानिलेभ्यो
नमोऽस्तु चन्द्रार्कमरुद्गणेभ्यः॥१०॥

नमः सवित्रे जगदेकचक्षुषे
जगत्प्रसूतिस्थितिनाशहेतवे ।
त्रयीमयाय त्रिगुणात्मधारिणे
विरिञ्चिनारायणशङ्करात्मने ॥११॥

स्वस्ति प्रजाभ्यः परिपालयन्तां
न्याय्येन मार्गेण महीं महीशाः ।
गोब्राह्मणेभ्यः शुभमस्तु नित्यं
लोकाः समस्ताः सुखिनो भवन्तु ॥१२॥

---

## निगमनम् ।

विज्ञानं नीतिमतिं व्यवहृतिपटुतां मनस्समुल्लासम् ।
कुरुते पठतां पाठावलिर्महालिङ्गसंग्रथिता ॥

इति श्रीमद्भरद्वाजान्वयमण्डन - चतुरधिकशतप्रबन्धनिर्वाहक-
श्रीमदप्पय्यदीक्षितेन्द्रवंशमुक्ताफलानां
महामहोपाध्याय-श्रीत्यागराजा-
ध्वरिणां प्रपौत्रेण
महामहोपाध्याय-शास्त्ररत्नाकरादि-बिरुदाञ्चित-
पण्डितमान्य-श्रीयज्ञस्वामिशास्त्रिवर्याणामात्मजेन,
श्रीमता महालिङ्गशास्त्रिणा,
विरचितेयं
॥ उपक्रमपाठावलिः समाप्ता ॥
॥ शुभमस्तु ॥

---

# NOTES.

पाठः १.

मिश्र a term indicative of respect (=அவர்கள்).

पाठः २.

After प्रथम and द्वितीय the following ordinals may be learnt तृतीय, चतुर्थ, पञ्चम and षष्ठ। तृतीया प्रावृट्। चतुर्थी शरत्।

पाठः ३.

सुभग delightful. The stanza is VI. 2. of the Ritusamhara slightly altered.

पाठः ५.

चामरवत् etc. the only few white clouds (which remain) are wafted about like chowries (வெண்சாமரங்களைப்போல்) in the sky by the wind. शाद्वलस्थलीषु चारयन्तः making (them) graze over green meadows.

पाठः ६.

तिन्त्रिणीवृक्षः the tamarind tree. पथिक way-farer. राजद्वारम् palace-gate दुर्गद्वारम् entrance to a fortified city.

पाठः ७.

वृन्तम् the foot-stalk of a fruit (காம்பு) छुरिका the knife. पनस etc. the bread fruit (பிலாப்பழம்) the jujube fruit (எலந்தைப்பழம்), the rose apple (நாகப்பழம்), the date fruit (பேரீச்சம்பழம்), the plantain fruit (வாழைப்பழம்), the grape fruit (திராக்ஷைப்பழம்) फलिनः (तः) bearing fruit षण्डः a cluster or group.

### पाठः ८.

Line 7; श्रीपतिः ...... । and कीदृशोऽस्य ........ । are to be read as two different lines. सुप्रतिष्ठिता=firmly fixed (in the mind). विद्यार्थिसभा=students' literary association. प्रसक्तिः occasion (meeting). प्रवचनं= speech. तथ्यम् true. Line 16; in the place of अश्नोति read; आप्नोति or अश्नुते ।

### पाठः ९.

Line 2; the two sentences are to be read as two distinct lines. नागरिकग्रन्थागारम् public library.

### पाठः १०.

हस्तादपराद्धं which missed the (hitting by the) hand. आभुग्नपूर्वकाया with the upper part of the body slightly stooping. देहलीप्रान्तः the corner of the threshold. मुग्धमुखः one with a face charming with innocence.

### पाठः ११.

शष्कुली (முறுக்கு) वेत्रः cane निष्ठुरतमः excessively cruel. जाल्म wretched, miscreant दुःसाधम् impossible of achievement पर्यध्ययनः one who feels repugnance for studying शाकटिकः cart-man. प्रतीकारः remedy. व्यपोहयिष्यति (not सि) will dispel. कालुष्यम् confusion or ignorance.

### पाठः १२.

कक्ष्या class or division. समीक्षा inspection समञ्जसम् correctly. (in a manner worthy of appreciation). संस्कारशुद्धिमत्या गिरा with the utterance faultless on account of cultivated excellences. कालावयवः period.

**संस्कृतहोरा** the Sanskrit hour. **साधयामस्तावत्** we will leave for the present.

**पाठः १३.**

**चारवशात्** on the basis of (the moon's) progression. **लङ्घयति** traverses: passes over. **आवृत्तिः** a round or circuit. In page 27 third line from bottom read **सारथिरनूरुः** (for **रूः**). The first stanza is taken from the Bhoja prabandha. The last line means "In the case of eminent persons, success of efforts is brought about by the force of personality and scarcely through external aids." Page 28 line 8 read **दृश्य** (not **स्य**) **मानस्य**। **विविनक्ति** explains or describes. Line 12 read **इन्द्रौ यद्** etc.

**पाठः १४.**

**ग्राहकनिर्देशः** address on a letter. The two sentences in bottom line should be read as two distinct lines. Similarly in the case of the 1st and 8th lines of page 29. **आह्वानपत्रिका** letter of invitation. **विश्रमदिवसाः** days on leave **कल्यशरीरः** with body free from ill-health.

**पाठः १५.**

**यात्रा** a festive occasion **स्फोटशब्दः** the noise of explosion **अग्निचूर्णम्** explosive powder.

**पाठः १६.**

In the top line of page 32 read "**गृहाणां**"। **पूरप्लव** over-flow of the flood. **धूमशकटः** Railway train. **नदीचर्या**—In the *Sambhucaryopadesa* a venerable person addresses a boy named *Sambhu* on the order

and discipline of early life, which shall conduce to worthy manhood according to oriental ideals. A few extracts are made here from that work. The नदीचर्या describes the course of a river from its origin up to its union with the ocean, with a subdued parallelism of the course of human life running through the description.

पाठः १७.

प्रसङ्गः occasion, relevancy मुद्ग a kind of bean (துவரை) स्तम्बः a sheaf of corn. Read समुन्नमय्य (for म्य). लेखिनी a pen (எழுத்தாணி). At bottom of page 34 the last word is to be read मन्थरो (not रे). श्लोकग्रन्थिः tough or knotty point of a verse. In page 35 lines 7 and 8 should be read (without the full-stop) as चिन्तयति च विनायके etc. दुर्ललित naughty.

पाठः १८.

Bottom line of page 35 the last word is "नद्यः"। At page 36 in the top line after सुतराः। read पन्थानश्च पङ्करहिताः। दिनकरः प्रकाशते। रजन्यश्चन्द्राभिरामाः। जलदैर्निर्मुक्ता दिशो etc. The stanzas are III 2 and 22 of the Ritusamhara.

पाठः १९.

In the first line after स्वस्ति। read श्रीमत्कैरवक्षेत्रात् वृषशैलक्षेत्रवास्तव्यानां etc. In para 3 of the lesson at the end of the 2nd line read तत्रभवत्या as one word. चीनस्फोटाः China crackers ज्योतिर्वर्तिसमुद्गकः a box of flower-matches (மத்தாப்பூப் பெட்டி)

**प्रज्वलनकाण्डाः** fire-works (வாணங்கள்) **दुर्ललित्यात्** (துஷ்டத்தனத்தினால்) by reason of naughtiness. **अतिलंघितः प्रसङ्गः** the propriety of the occasion was transgressed (நியாயம் மீறி நடக்கப்பட்டது) **पोट्टलिका** (பொட்டலம்) packet- **तौर्यिकमेलकः** combination of musical instruments (நாயனக்காரர் சேர்க்கை). In line 8 of page 38 read **विरचितुमारभत । हंसनामाङ्किता मषीनालिका** Swan-pen. In line 12 **सञ्जाता** In page 39 line 5 read **प्रतीक्षमाणो** (for **णा**).

**पाठः २०.**

**चेतश्चमत्कारः** an agreeable surprise of the mind upon its discerning a charming quality in a composition.

**पाठः २१.**

**भोज्या**—Indumati. **भोगेन रोगभावं (रोगो भूत्वा) अग्रस्यत** was mortally seized by the overindulged pleasures of the senses themselves, they having turned into disease. **पाठान्तरम्—रोगपीडम् ।** having afflicted him with disease.

**पाठः २२.**

**उपशल्यम्** an open place in the vicinity of (a village). In page 44, line 2 read **देशः** (for **शः**) **यात्रिकैर्भि** (for **र्भि**) **क्षुकैर्वा** etc. **विचित्रसन्दर्शनकम्** an interesting spectacle. In line 6 **प्रियवयस्यः** is to be read together. The beggars referred to are the snake-charmer, the beggar with the monkey, the magician, poledancer, (கம்பக்கூத்தாடி), the beggar with the hand-drum (குடுகுடுப்பைக்காரன்), the beggar with the bowl, the musical beggar, and the recluse beggar (பரதேசி). Page 45 top line read **शङ्कौ ।**

### पाठः २३.

In page 47 line 6 कालिन्दीपुलिनोदरेषु is one compound. The verses are from the Krishna-karnamrita Part II. कर्बुरिकापयः—perhaps means boiled milk of a greyish cow. वैयात्य audacious boldness. In page 48 first line read (without the fullstop) मातः कश्चन etc.

### पाठः २४.

4th line from bottom चम्पूप्रबन्धानां is to be read together. वर्षाशनम् means of subsistence for a year. पारितोषिकम् reward. प्रीतिदायः gift made out of regard. In line 14 of page 49 read कति छात्रास्तर्के etc.

### पाठः २५.

विकटावकाशे etc. while there is plenty of time before evening twilight would set in. सब्रह्मचारी fellow-student. अग्रिमः one who leads or is first in order. निशिततमा नियमाः conditions which are extremely severe.

### पाठः २६.

आघाटः boundary. In page 55 line 10 read वत्त्वात्। गोभिश्च etc., through their possessing cows of lusty growth on account of their feeding upon plenty of grass. Page 56 line 3 संपन्नावश्यक etc., which is endowed with all that is necessary for comfortable living.

At page 57 lines 7 to 9 the following professional men are mentioned; the carpenter, the weaver, the potter, the washerman, the plough man

the blacksmith, the goldsmith, the barber, the cow-herd, the actor, the dancer, the painter, the mason, the oil man and the merchant. The purport of the next sentence (lines 10 and 11) is as follows :—For most of these people demarcated fields available for free enjoyment had been made the subject of grants individually in return for services from the time of the original establishment of the village by virtue of agreement to which the village public was party.

In line 11 read आग्रामाधिवेशनं etc.

पाठः २७.

Ramayana, Balakanda, Sarga 30.

---

PRINTED AT THE SRI VIDYA POWER PRESS, KUMBAKONAM.

# GLOSSARY

(in the order of the lessons.)

1. दारिका - பெண். भगिनिका - தங்கை.

2. तुहिनम् - பனி.

3. सुभग - அழகான. प्रदोष: - அஸ்தமனசமயம்.

4. व्योम - ஆகாயம். जलधर: - மேகம். रथ्या - வீதி.

5. विद्युत - மின்னல். अशनि: - இடி.. इन्द्रधनु: - வானவில். सहस्रभानु: - சூரியன். शीतकिरण: - சந்திரன். शालि: - நெல் பயிர். कीर: - கிளி. शाद्वलस्थली - புல்தரை.

6. काष्ठम् - கட்டை.

7. विटप: - கிளை. छुरिका - கத்தி. तरुषण्ड: - தோப்பு. अम्ल - புளிப்பான. माकन्द: - மாமரம்.

8. कौशलम् - சாமர்த்தியம்.

9. अगारम् - அறை. विपुल - விசாலமான.

10. आभुग्न - குனிந்த. देहली - ரேழி. अंशुकम् - மேல் வஸ்திரம். चोरिका - திருடி. अलीकम् - பொய். मुधा - வீணாக. धूर्तक: - போக்கிரிப்பயல். अविश्वसनीय: - நம்பத்தகாதவன். दुश्चेष्टितम्-துஷ்டத்தனம். प्रत्यहम्-ஒவ்வொருநாளும். मिथ्या-பொய்யாக. उत्सेक: - கர்வம். दिष्ट्या - யதிருச்சையாக.

11. राशि:-குவியல். निकामम्-அதிகமாக. मत्सर:-பொறுமை. उपपन्नम् - சரிதான். उद्यमी - முயற்சியுள்ளவன். बाढम् - ஆம். सकृत् - ஒரு தடவை. द्वि: - இரு தடவை. त्रि:-மூன்று தடவை. व्याजजल्पितम् -வீண்பேச்சு. जाल्म:-போக்கிரி. द्विगुणम् - இருமடங்கு. श्व: - நாளைக்கு. प्रतीकार: - ஸாதகமான உபாயம். पर्यध्ययन: - படிப்பிலலுப்புள்ளவன்.

शाकटिकः-வண்டிக்காரன். अवितथम् - உண்மை. साहचर्यम् - சேர்ந்து இருக்கை. कालुष्यम् - சந்தேகம். दैनन्दिनः - ஒவ்வொரு நாளைய. सहाध्यायिन् - சேர்ந்து படிப்பவன்.

12. समञ्जसम् - ஒழுங்காக. विवेकः - நன்கறிதல். मौग्ध्यम् - அறியாமை.

13. पन्थाः - வழி. सान्द्रम् - கனமான. मरीचिः - கிரணம். आवृत्तिः - சுற்று. अध्वा - வழி. गगनाभोगः - ஆகாய வெளி. अङ्कः - அடையாளம். जलनिधिः - சமுத்திரம். पङ्कः - சேறு. सारङ्गः - மான். इन्द्रनीलः - இந்திரநீலக்கல். अन्धतमसम् - நல்லிருட்டு.

14. आह्वानपत्रिका - அழைப்புக்கடிதம். अन्तरेण - குறித்து. पितृव्यः - சிறிய தகப்பனார். पितृष्वसा - அத்தை. भागिनेयः - மருமகன். पितृष्वस्रेयः - அத்தான். प्रजावती - மதனி. भ्रातृव्यः - தம்பியின் குமாரன் कल्यशरीरः - ரோகமில்லாத சரீரமுடையவர். वार्धक्यम् - கிழத்தனம்.

15. वसन्तयात्रा - வஸந்தகாலத்திய ஸ்வாமி புறப்பாடு. आरवः - சத்தம். निनादः - சத்தம். रज्जुः - வடம். கயிறு. किङ्किणी - சிறியமணி. तुमुल - ஆரவாரிக்கின்ற. संमर्दः - நெருக்கம்.

16- कृषीवलः - குடியானவன். योषित् - ஸ்திரீ. अर्भकः - குழந்தை. सस्यम् - பயிர். छागः-ஆடு. पुलिनम् - மணல் மேடு. गाध மேடான. जलाशयः-குளம். आमयः-வியாதி. दरी-பள்ளத்தாக்கு. पालिः - வரிசை; மத்தியில் உள்ள இடம். बुद्बुदः - குமிழி.ह्रदः-மடு. सारणी-அருவி. कूटम् கொடிமுடி. कटकम्- தாழ்வரை. आसारः-நீர்பெருக்கு. सार्थक्यम् - பிரயோஜனம்.

17. **अगजा** - பார்வதி. **उदरपूरमशित्वा** - வயிறு நிறைய சாப்பிட்டுவிட்டு. **मन्थरम्** - மெதுவாக. **मुद्गः** - துவரை. **स्तम्बः** - தட்டை. **अञ्चलः** - நுனி. **अञ्जलिः** - பிடியளவு. **प्रतीची** - மேற்கு. **प्रहरणम्** - ஆயுதம். **जवः** - வேகம். **कुञ्जरास्यः** - கணபதி. **धाटी** - தடையற்ற நடை.. **परिस्खलनम्** - தடு மாறுதல். **दुर्ललितः** - விஷமக்காரன்.

18. **अभिराम** - அழகுவாய்ந்த. **शिशिरदीधितिः** - சந்திரன். **बृन्दम्** - கூட்டம். **श्यान** - உலர்ந்த. **आनुसंवत्सरिकः** - வருஷந்தோறும் ஏற்படுகின்ற. **जैत्रयात्रा** - விஜயயாத்திரை.

19. **वास्तव्य** - வஸிக்கின்ற. **निरवद्य** - குற்றமற்ற. **मेदुर** - நிரம்பிய. **बिरुदम्** - பட்டம். **पवित्र** - புனிதமாக்கக் கூடிய. **ब्रह्मश्रीः** - பிராம்மண தேஜஸ். **सहस्रकृत्वः** - ஆயிரம் தடவை. **महः** - கொண்டாட்டம். **निर्भर** - நிரம்பிய. **देवरः** - மைத்துனன் **अभियोगः** - பற்றுதல்; பிடிவாதமான முயற்சி. **दुर्ललितत्वम्** - அடங்காத தன்மை. **अनुशयः** - பச்சாத்தாபம். **वार्ता** - சமாசாரம். **वत्सल** - அன்புள்ள. **प्राघुणिकः** - விருந் தாடி. **समक्षम्** - முன்பாக. **अभ्यवहारः** - சாப்பாடு. **आवुत्तः** - அத்திம்பேர்

20. **साहित्यसुधा** - கவிதையாகிற அமிர்தம். **नैसर्गिकी** - இயற்கையான. **चिकित्सा** - வைத்யம். **पुष्कल** - நிரம்பிய. **चतुर्वर्गः** - தருமம், அர்த்தம், காமம், மோக்ஷம் இவை நான்கு.

21. **विश्रुत** - பிரஸித்திபெற்ற. **ऋद्धिः** - செல்வம். **राजन्यकम्** - சிற்றரசர் கூட்டம். **जन्यम्** - சண்டை. **इन्द्रसखः** - இந்திரன் தோழன். (தசரதன்) **कक्षः** - வைக்கோல் போர். **दावः** - காட்டுத் தீ. **अन्तेवसन्** - சிஷ்யன். **भूयिष्ठम्** - அனேக மாக. **महार्घ** - மிகவும் விலையுயர்ந்த; வெகு அருமையான. **अपदानम्** - கீர்த்தி.

22. न्यग्रोधः - ஆலமரம். वैदेशिकः - வெளியூர்க்காரன். सन्दर्शनकम् - கண்காக்ஷி. तिर्यच् -நாற்கால் பிராணி मंजूषा- பெட்டி. शंकुः - முளை. प्रेक्षणकम् - காக்ஷி.

23. विपश्चित् - பண்டிதன். अत्याहितम - பெரிய விபத்து. चुल्ली - அடுப்பு. शरावः-போகிணி; வாணலி. संव्यानम्- மேல் புடவை. सुपेशलम्-அழகான. सन्दोहः-திரட்டு. पीयूषम् அமிருதம். जीमूतः - மேகம். पिशुनः - கோள் சொல்லுகிறவன். कुक्षिंभरिः - வயிற்றில் அடக்கிக்கொண்டவன். आगः - குற்றம் वल्लवी - இடைச்சி. प्रतारणं - ஏமாற்றல். चषकम- லோடா. वैयात्यम् - துணிச்சல்.

24. समग्र - பூர்ணமான. आढ्यः-பணக்காரன். वैदुष्यम्- பாண்டித்யம். साङ्गः-பூர்ணமான. विशारदः - கைதேர்ந்தவன்.

25. विस्रब्धम् - நிம்மதியாக. अलिन्दः-வெளித்திண்ணை மேடை. उपश्लेषिन् - ஒட்டியுள்ள. मञ्जीरः - கால்சிலம்பு. शिञ्जितम् - சலசலவென்ற சப்தம். याचमानजनः - யாசகன். प्रभविता - அதிகாரமுடையவன். निर्व्याजता கபடமில்லா திருத்தல். वैदग्ध्यम திறமை. वारिवाहः மேகம். हर्म्यम् - மெத்தை வீடு. बलभित् - இந்திரன்.

26. चतुराघाटाः-நான்கு எல்லைகள். जनपदः-தேசத்தின் பிரிவு. परिच्छदः-ஆடையாபரணம். स्थाने-ஒத்துக்கொள்ளத் தக்கது. याथार्थ्यम्-உண்மை. संबाधः-நெருக்கடி. तर्षः-ஆசை वाचोयुक्तिः-சொல்லப்பட்ட வாக்யம். गोष्ठम्-மாட்டுக்கொட்டில். वावदूकः - வாசாலகன். मनुः - மந்திரம். पूगः - பாக்கு. अनामयः-வியாதிபற்றவன். कुल्या-கண்ணி. पल्वलम्-குட்டை. दीर्घिका-ஓடை. वाटी-புஷ்பத்தோட்டம். अगारम्- கோவில், வீடு. सन्निवेशः - அமைப்பு. अभिजनः - உள்ளூர்க்காரன்

**वरिवस्या** - சேவை; ஊழியம். **अधिवेशनम्** - ஏற்படுத்துதல். **समुदायः** - பொதுஜனம். **समयः** - உடன்படிக்கை. **गणकः** - கணக்கன். **यामिकः** - தலையாரி. **रक्षिन्** - காவல்காரன். **निष्णातः** - தேர்ச்சியடைந்தவன். **सभ्यः** - அங்கத்தினர். **देशिकः**-உபாத்தியாயர். **शिक्षायतनम्** - கல்விகற்பிக்குமிடம். **विद्यामन्दिरम्** - பாடசாலை. **केदारः**-வயல். **सीमातटी** - வரப்பு. **संवेशः** - படுத்தல். **अभ्रम्** - மேகம். **डुण्डुभः**-தண்ணீர்ப்பாம்பு. **अंसः** - தோள். **जातवेदाः** - அக்னி. **शेवधिः** - இருப்பிடம். **अपराह्णः** - பிற்பகல். **कन्दम्** - கிழங்கு. **कल्मषम्** - பாபம்.

27. **युयुत्सा** - சண்டைபோட ஆசை. **चमसः स्रुक्** - யக்ஞபாத்திரங்கள். **भयानक** - பயங்கரமான. **रुधिरौघः** ரத்தவெள்ளம். **राजीवलोचनः** தாமரைப்பூப்போன்ற கண்களையுடையவன். **पिशिताशनः** மாம்சம் புசிக்கும் அரக்கன். **शातेषुः** வாருணாஸ்திரம். **निर्घृणः** இரக்கமற்றவன். **दुष्टचारिन्** கெட்டசெய்கையுடையவன். **निरीतिका** பீடைகளகன்ற.

---

77

…। Sambucaryopadesa–
…on into Sanskrit verse
…dged form of "A Day
…hu" by Mr. K. S. Ven-
kataramani. ... 0—4—0

…। Kinkinimala—A first
…collection of songs, lyric
… poems—*fifty* pieces in all.
…h Bound (*Reduced*) ... 1—8—0
Paper Cover ... 1—4—0

…वम् । Kumarasambhava—
… V, VI & VII (for the
… Intermediate Examinations)
… critical Introduction, accu-
…anslation and useful notes ... 1—4—0

…ठावलिः । A Sanskrit First
…r. .... 0–10—0

…ठावलिः । A Middle Reader of
Sanskrit (in press) .... 0–10—0

…ठावलिः । An Advanced Reader
…anskrit ... 0–12—0

…he three Readers as a set purchased at
… same time can be supplied at 1—12—0
… set. Special terms for book-sellers.]

